क्रूरेण जीयमानो यो राहुपार्श्वे यथा रविः ।
क्रूराक्रान्तः स विज्ञेयः क्रूरयुक्तः समेंशके ॥१५४॥
पूर्णया दृश्यते दृष्ट्या क्रूरो दृष्टः[1] स उच्यते ।
प्रविविक्षुः प्रविष्टो वा सूर्यराशौ विरश्मिकः ॥१५५॥
लग्नाधिपे विनष्टे स्याद्विनष्टावयवः पुमान् ।
विनष्टजातिवर्णश्च शुभाकारो विपर्यये ॥१५६॥

राजयोगानाह

भावेभ्योऽप्युत्तमं भाग्यं तृतीयेन समन्वितम् ।
उभयत्राश्रिताः सौम्या भाग्यस्यैव हि पोषकाः ॥१५७॥
तृतीयेऽपि ग्रहे[2] सौम्या[3] भाग्यप्रकर्षपोषकाः ।
तत्रापि पूर्णदृष्ट्या च पुण्योपचयसाधकाः ॥१५८॥

---

जिस तरह राहु के पास सूर्य दिखाई देते हैं उसी तरह पापग्रहों से जो ग्रह पराजित किया गया हो वह क्रूराक्रान्त कहलाता है।

यदि क्रूरग्रह के समान अंश में कोई ग्रह हो तो वह क्रूरयुक्त कहलाता है ॥१५४॥

जब कोई ग्रह पापग्रह से पूर्णदृष्टि से देखा जाय तो क्रूरदृष्ट कहलाता है। जो ग्रह सूर्यराशि में प्रवेश करना चाहता अथवा प्रविष्ट हो गया हो वह विरश्मिक समझा जाता है ॥१५५॥

लग्नाधीश यदि विनष्ट हो तो उसे किसी अङ्ग से हीन कहना चाहिये। उसके जाति और वर्ण सभी नष्ट कहने चाहियें। इसकी विपरीतावस्था में उसे शुभ आकार वाला कहना चाहिये ॥१५६॥

सभी भावों में भाग्यस्थान और तृतीय स्थान उत्तम कहा गया है। इन दोनों स्थानों में यदि शुभग्रह हों तो वे भाग्य के पूर्ण वर्द्धक होते हैं ॥१५७

तृतीय भाव में यदि शुभ ग्रह हों तो वे भाग्य के प्रकृष्ट पोषक होते हैं। फिर भी यदि वे पूर्ण दृष्टि से भाग्येश को देखते हों तो उसे पुण्यशील कहना चाहिये ॥१५८॥

---

1. क्रूरदृष्टः for क्रूरो दृष्टः A. 2. ग्रहाः for ग्रहे A. 3. भाग्याप्रकर्ष A., भाग्यप्रकर Bh.

ततो मूर्तिः पुनः श्रेष्ठा भाग्यानां तु समाश्रयः ।
भावानां परमो भावस्तनुर्द्वादशपोषकः ॥१५९॥
तूर्ये सौम्याः शुभा एव मातृद्रव्यादिभोज्यदाः ।
राज्यप्रदाः शुभैर्दृष्टाः सर्वे सम्पत्तिदायकाः ॥१६०॥
ततस्तुर्यं निधिः श्रेष्ठं राज्यभावसमन्वयम्[1] ।
ततः शुभं[2] शुभैर्दृष्टं लाभेन सहितं नभम्[3] ॥१६१॥
ततो धनं शुभाक्रान्तं जायास्थानं ततः शुभम् ।
शुभमप्यस्तकेन्द्रत्वाच्छुभस्थानं बले गते[4] ॥१६२॥
उदयगते वृषराशौ भाग्यं पश्यति भाग्यपे ।
तत्कालं यः पुमान् जातो यावज्जीवं समृद्धिमान् ॥१६३॥
उदयतो वृषेशस्य स्वोच्चं तदैव गच्छतः[5] ।
स्वयं पश्यति लग्नेशे जातश्चिरं समृद्धिमान् ॥१६४॥

---

भाग्यादिकों का आश्रय होने के कारण लग्न भी श्रेष्ठ माना गया है और सब भावों को पुष्ट करने वाला लग्न सब से श्रेष्ठ है ॥१५६॥

चतुर्थ स्थान में शुभग्रह रहने से ही शुभ होता है और वे मातृ-धन-भोज्य आदि सुख को देने वाले होते हैं। यदि वे शुभग्रहों से देखे जायें तो राज्य वा सम्पत्ति देने वाले होते हैं ॥१६०॥

उसके बाद राज्यस्थान को समन्वय करने वाला चतुर्थ स्थान श्रेष्ठ है। उसके बाद लाभस्थान से सम्बन्ध रखने वाला दशम भाव शुभ ग्रह से युक्त या देखा जाय तो शुभ फल देता है ॥ १६१ ॥

शुभ ग्रह से सम्बन्ध रखने वाला धनस्थान और सप्तम स्थान हो तो शुभ होता है। सप्तम स्थान भी केन्द्र होने के कारण बलवान, शुभ ग्रह से युक्त, दृष्ट होने से शुभ होता है ॥ १६२ ॥

वृष लग्न हो और भाग्येश भाग्य स्थान को देखता हो उस समय में जो लड़का पैदा हो उसे आजीवन ऐश्वर्ययुक्त कहना चाहिये ॥ १६३ ॥

वृष लग्न हो और लग्नेश स्वोच्चाभिमुख अर्थात् उच्च स्थान में जाता हो और लग्नेश लग्न को देखे तो बालक चिरकाल तक ऐश्वर्ययुक्त होगा ॥ १६४ ॥

---

1. भावसमं द्वयम् for भावसमन्वयम् A. 2. सतं for शुभं A. 3. The reading मतम् ( A.. Bh. ) for नभम् is correct. 4. गतम् for गते A. 5. भाग्यं पश्यति भाग्यपे । तत्कालं यः पुमान् जातो यावज्जीवं for स्वोच्चं तदैव गच्छतः । स्वयं पश्यति लग्नेशे Bh.

[1] लग्नस्वनिधिभाग्येशेऽभ्युदयात् पञ्चतुर्यके[2]।
तत्कालं यः पुमान् जातः स च कोटीश्वरो भवेत् ॥१६५॥
सर्वैर्ग्रहैः पुरे दृष्टेऽभ्युदयत्येव लग्नपे ।
स्वोच्चमित्रस्वगेहे[3] वा जातो भवति भूमिपः ॥१६५॥
केन्द्रगतैः सर्वग्रहैरुदयत्येव लग्नपे ।
मूर्तिं पश्यति लग्नेशे चक्रवर्ती नरस्तु सः ॥१६७॥
भाग्यपेऽभ्यन्तरे राशौ गते जन्म यदा भवेत् ।
लग्नपे च विशेषेण यावज्जीवं समृद्धिमान् ॥१६८॥
त्रिभिश्छत्रं महाच्छत्रं पञ्चभिश्[4]चातिच्छत्रकम् ।
सप्तभिस्तुर्यपङ्क्त्यन्तं ग्रहैश्छत्रादिनिर्णयः ॥१६९॥
लग्नाधारो भवेज्जीवः शरीरं चन्द्रमाः पुनः ।
तेजस्तेजोनिधिः प्रोक्तः शाखाः स्युस्त्वितरे ग्रहाः ॥१७०॥

लग्नेश, धनेश, चतुर्थेश और भाग्येश यदि लग्न से पञ्चम वा चतुर्थ स्थान में हों तो उस लग्न में उत्पन्न बालक कोटीश्वर अर्थात् बड़ा धनवान होता है ॥ १६५ ॥

लग्नेश लग्न वा अपने उच्च अथवा मित्र स्थान में रहे और शुभ ग्रहों से देखा जाय तो वह शिशु राजा होता है ॥ १६६ ॥

सभी ग्रह केन्द्र में और लग्नेश लग्न में रहे वा लग्नेश लग्न को देखे तो वह मनुष्य चक्रवर्ती होता है ॥ १६७ ॥

भाग्येश लग्न और भाग्य स्थान के बीच किसी राशि में हो वा लग्नेश लग्न और भाग्य के बीच हो तो वह शिशु जीवनपर्यन्त समृद्धि-शाली होता है ॥ १६८ ॥

तीन ग्रहों से छत्र, पांच ग्रहों से महाछत्र, सात से अतिछत्रक, चार से दस तक इस प्रकार ग्रहों से छत्र आदि का निर्णय समझना चाहिये ॥ १६९ ॥

गुरु शरीर का आधार, चन्द्रमा शरीर और सूर्य शरीर का तेज माने गये हैं । और मंगलादि अन्य ग्रह उसकी शाखा होती हैं ॥ १७० ॥

1. लग्नस्य for लग्नस्व A., लग्नेशो Bn. 2. ऽभ्युदयत्येव तुर्यके for ऽभ्युदयात् पञ्चतुर्यके A. 3. स्वगृहे for स्वगेहे A. 4. पञ्चभिरति for पञ्चभिश्चाति A.

लग्ने गुरुर्निधौ चन्द्रः छिद्रे शुक्रः पदे रविः ।
स्वमित्रे निजगेहादौ वाञ्छितेशो भवेन्नरः ॥१७१॥
मूर्तौ जीवः सितस्तुर्ये स्मरे सोमः पदे रविः ।
राहुणा सहितो लग्ने स प्रौढः पुण्यभाजनम् ॥१७२॥
विद्या संजीवनी नाम शुक्रस्यैव न वाक्पतेः ।
अतोऽपि हेतुना जीवात्कविरेव बलाधिकः ॥१७३॥
लग्नवित्ताधिपौ लग्ने दृष्टौ जीवहिमांशुना ।
नीचे वा शत्रुलाभे वा कोटिशो वस्तु यच्छतः ॥१७४॥
यत्र यद्राशिपो राजा भवन्नुदेति तत्क्षणम् ।
तद्राशिलग्नवाक्यानामुदयस्तत्र[1] वत्सरे ॥१७५॥
उच्चस्थो मुदितो राजा राशिपो[2] लग्नतो[3] यदि ।
तत्र वर्षे शुभं कुर्याद्दुष्टो वापि गृहाधिपः ॥१७६॥

---

यदि लग्न में गुरु, चतुर्थ स्थान में चन्द्रमा, अष्टम स्थान में शुक्र और पद स्थान में सूर्य हों और अपने मित्र या स्वगृह इत्यादि में स्थित हों तो स्वेच्छापूर्ति वाला होता है ॥ १७१ ॥

लग्न में गुरु, चतुर्थ स्थान में शुक्र, सप्तम में चन्द्र और पदस्थान में सूर्य, राहु से युक्त लग्न हो तो वह मनुष्य प्रौढ़ पुण्यराशि वाला होता है ॥ १७२ ॥

संजीवनी विद्या शुक्र के पास ही है, बृहस्पति के पास नहीं। इस लिये भी गुरु से शुक्र ही बल में अधिक है ॥ १७३ ॥

लग्नेश और धनेश लग्न में रहें, गुरु तथा चन्द्रमा की दृष्टि उन पर रहे तो लग्नेश और धनेश नीच शत्रु वा लाभ स्थान में भी रहें तो वे मनुष्य को करोड़ों वस्तुएँ देते हैं ॥१७४॥

जिस किसी राशि का भी स्वामी वर्षेश होकर उस समय लग्न में हो तो उस वर्ष उस राशि वा लग्न वालों को लाभ होता है ॥१७५॥

किसी राशि का स्वामी वर्षेश होकर यदि उच्च का हो उस उच्च-स्थ राशि का स्वामी दुष्ट हो, उस वर्ष में वह प्रसन्न होकर शुभ फल ही पाते हैं ॥१७६॥

---

1. ०वाच्याना ०for ०वाक्याना० A. 2. राशिपौ for राशिपो A
3. लग्नपौ for लग्नतो A.

षष्ठाष्टमान्त्ये सौम्यास्तत्फलाः क्रूरास्तदर्थहाः ।
नेन्दुर्लग्नान्त्यषष्ठाष्टः शेषस्थानौघपोषकाः ॥१७७॥

इतिग्रहस्वरूपम् ।[1]

मूर्तौ ज्ञेयं रूपवृत्तं लक्षणायुर्वयो व्रणम् ।
वर्णक्लेशदोषमानपूजारोग्यं[2] शुभं सुखम् ॥१७८॥
धने मौक्तिकरत्नानि हेमाद्याः सप्तधातवः ।
पशुधान्याम्बरं क्रय्यं क्रयाणकगणो धनम् ॥१७९॥
सहजात्मशुभदासीभगिनीभ्रातृपदादयः ।
सुहृत्सुखं दुःखमैत्री निधि[3]स्थानगमागमौ ॥१८०॥
ग्रामपितृमातृकृषिवाटीधृतिगेहिनीमहोषधयः ।
भुक्तिर्बिलप्रवेशादेशो[4] लाभं च कुशलं च ॥१८१॥
सुतान्मन्त्रसुतौ[5] विद्याप्रतापशिष्यबुद्धयः ।
गर्भ[6]सन्धिः शुभद्रव्यं स्थानोपायनयादयः ॥१८२॥

---

६, ८, १२ वें गृहों में सौम्य ग्रह शुभ फल देते हैं और क्रूर ग्रह धन की हानि करते हैं अन्य स्थानों में ग्रह पुष्टिकारक होते हैं। १, १२, ६, ८ वें स्थानों में चन्द्र शुभ नहीं होता है ॥१७७॥

लग्न स्थान से रूप, लक्षण, आयु, अवस्था, वर्ण, क्लेश, दोष, मान, पूजा, आरोग्य, शभ, सुख इत्यादि विषयों का विचार किया जाता है ॥१७८॥

धनभाव से मोती रत्न, और सुवर्ण आदि सात धातु पशु, धान्य, वस्त्र और अन्य भी क्रय वस्तुओं का विचार करना चाहिये ॥१७९॥

सहज स्थान से शुभ दासी, बहिन, भाई, पद आदि का विचार, सुहृद्भाव से मित्र, सुख, दुःख निधि का आना वा जाना, ग्राम-मातृ-पितृ सुख, कृषि, बाग, धैर्य, स्त्री, महोषधि, भोग, बिलप्रवेश, आज्ञा, लाभ और कुशल, का विचार करना चाहिये ॥१८०-८१॥

पञ्चम स्थान से पुत्र, मन्त्र, विद्या, प्रताप, शिष्य बुद्धि, गर्भ, सन्धि, शुभ द्रव्य की प्राप्ति, स्थानप्राप्ति, उपायसिद्धि, नीतिसफलता आदि का विचार करना चाहिये ॥ १८२ ॥

---

1. After this A[1] reads: इदानीं द्वादशभावेभ्यो वपुषो (? नो ms) यस्य निर्णयः क्रियते तान् भावानाह । 2. पूज्या for पूजा A. 3. वृद्धि for निधि A A[1] 4 प्रवेशोदेशो for प्रवेशादेशो Bh. 5. सुतो for सुतौ A. 6. गर्भः सन्धिः for गर्भसन्धिः A[1]

रिपौ चतुष्पदं नीचं मातुलः क्रूरकर्म च ।
दासी दासो रिपुर्व्याधिः परतोऽहङ्कृतिर्व्रणम् ॥१८३॥
अस्तात्साध्यव्यवहारः कलहश्च गमागमौ ।
चौरो विजयः स्वस्थत्वं हर्षो भगटकः[1] स्मृतः ॥१८४॥
मृत्योर्नद्युत्तारगणो[2] यथाधिदुर्गमापदः ।
योनिविस्मृतिनिष्पत्तिः[3] संवादो[4] भेदपत्तयः ॥१८५॥
शत्रुद्रव्यं परीवारो मृतार्थश्चिरवस्तुनः[5] ।
निधनं[6] पोतजार्थाप्तिराकुलत्वं[7] च चिन्तयेत् ॥१८६॥
धर्माद्वापी कूपसरः प्रपामठ[8]सुरालयाः ।
दीक्षायात्रानव्यविद्या पुण्यं भाग्यं गुरुस्तपः ॥१८७॥

---

षष्ठ स्थान से नीच पशु, मामा, क्रूरकर्म, दासी, दास, शत्रु, व्याधि, दूसरे से अहंकार तथा क्षति आदि बातों का विचार करना चाहिये ॥ १८३ ॥

सप्तम स्थान से योग्य व्यापार, आना, जाना, व्यय, चोर, विजय, स्वस्थता, हर्ष, रोग, आदि का विचार करना चाहिये ॥ १८४ ॥

अष्टम स्थान से नदी को पार करना, आधि, मार्ग के संकट, मार्गश्रम, मार्गापत्ति, योनि, विस्मृति, संवाद, भेद, शत्रु, द्रव्य, परिवार, चिर नष्ट धन तथा वस्तु, मरण, सामुद्रिक व्यवसाय से अर्थलाभ तथा राजकुल के सम्बन्ध आदि का विचार करना चाहिये ॥ १८५-८६ ॥

धर्मस्थान से बावड़ी, कूप, तालाब, प्याऊ मन्दिर तथा मठ, दीक्षा, यात्रा, नवीन प्रकार की विद्या, पुण्य, भाग्य गुरु और तपश्चर्या आदि के विषयों का विचार करना चाहिये ॥१८७॥

---

1 रुकुठकः for भगटकः Amb. 2. for मृत्योर्नद्युत्तारगणोमृत्योर्निद्युत्तारगणो A. नद्यो मृत्युतारगणो पथ्याधि० 3. नष्टाप्तिः for निष्पत्तिः A, Bh. 4. संवादो for संवादो A. 5. मृतार्था भकटकः स्मृता Bh. 6. निधानं for निधनं A. 7. ०राजकुलत्वं for राकुलत्वं A. 8. पाठ for मठ A.

कर्मतो राजवृद्धयादि पितृमुद्रापुरादिकम् ।
खेचरत्वं पुण्यमानौ निर्वाहश्चाधिकारिता ॥१८८॥
राजवेश्म मित्रवेश्म पशुप्रारब्धकर्म च ।
आचार[1]स्थानमायातुर्यानानि[2] करिवाजिनः ॥१८९॥
वस्त्रायुः स्वर्णसस्यस्त्रीविद्याराजपरिच्छदः ।
मित्राश्रमौ रूपवित्तं[3] लाभो राजकुलादपि[4] ॥१९०॥
व्ययाद्विवाहयज्ञादि महायुद्धानि कीर्त्तनम् ।
त्यागभोगौ कृषिभ्रंशः विश्वासकुपथा व्ययः ॥१९१॥

इति द्वादशभावेभ्यस्तत्त्वचिन्ता ।

सर्वश्रियां परीणामो यत्स्वरूपं जगत्त्रयम् ।
सिद्धचक्रं नमस्कृत्य वक्ष्ये किञ्चित्तमोऽपहम् ॥१९२॥

कर्मस्थान से राजकुल में प्रतिष्ठा, सम्मान आदि, पैतृक सम्पत्ति की प्राप्ति, ग्राम आदि की प्राप्ति, व्योमयानों में उड़ना अथवा देवार्ह सम्मान की प्राप्ति, पुण्यप्राप्ति, श्रेयप्राप्ति, अच्छा निर्वाह तथा अधिकार-प्राप्ति—इन बातों का विचार करना चाहिये ॥१८८॥

राजभवन से सम्बन्ध, मित्र के घर से सम्बन्ध, पशु के साथ सम्बन्ध, प्रारब्ध कर्म की सफलता, आचार, स्थान, तथा हाथी, घोड़ा आदि यानों के विषय में विचार करना चाहिये ॥१८९॥

आय स्थान से वस्त्र, आयु, सुवर्ण, धान्य, स्त्री, विद्या, राज-सम्बन्ध, मित्र, आश्रम, रूप, धन राजकुल से लाभ आदि बातों का विचार करना चाहिये ॥१९०॥

व्यय स्थान से विवाह, यज्ञ, आदि, युद्ध, त्याग, भोग, कृषि की हानि, किसी पर विश्वास तथा कुमार्ग से धन व्यय आदि विचार करना चाहिये ॥१९१॥

जो सब प्रकार की सम्पत्तियों के कारण हैं, जो तीनों लोकों के स्वरूप हैं ऐसे सिद्ध महापुरुषों को नमस्कार करके मैं कुछ अज्ञाननाशक बातें कहता हूँ ॥१९२॥

---

*1.* आचारा: for आचार A. *2.* मायान्त यानानि for °माया-तुर्यानानि A. *3.* भूपवित्तं for रूपवित्तं A. भूमिवित्त Bh. 4. The reading of the Amb. text (राजलाभो कुलादपि) is obviously in-correct, I have, therefore, adopted the reading of A, A[1].

अश्विनी मृगशीर्षश्च हस्तः पुष्यः पुनर्वसुः ।
स्वातिश्च रेवती चैव जन्मकाले धनप्रदाः ॥१९३॥
भरणी च मघा चित्रा विशाखा शततारिका ।
धनिष्ठाऽऽश्लेषिका प्रोक्ता जन्मन्यशुभदायिनः[1] ॥१९४॥
कृत्तिका रोहिणी चार्द्रा ज्येष्ठा मूलाख्यतारिका ।
श्रवणं चानुराधा च मघा पूर्वोत्तराधिकम्[2] ॥१९५॥
सोमो बुधो गुरुः शुक्रो वाराश्चत्वार उत्तमाः ।
रविर्भौमः शनिर्वारो[3] विपरीतः समासतः[4] ॥१९६॥
नन्दा भद्रा जया पूर्णा शुभदास्तिथयो मताः ।
द्वादश्याद्याश्च रिक्ताश्च सर्वकर्मसु वर्जयेत् ॥१९७॥
तिथिनक्षत्रवारेषु शुभेषु जन्म यस्य वै ।
त्रिकोणोच्चग्रहैर्लग्ने राजा भवति सात्त्विकः ॥१९८॥

---

अश्विनी, मृगशिरा, हस्त, पुष्य, पुनर्वसु, स्वाती और रेवती—ये नक्षत्र जन्मकाल में प्रशस्त तथा धन को देने वाले हैं ॥१९३॥

भरणी, मघा, चित्रा, विशाखा, शतभिषा, धनिष्ठा, आश्लेषा—ये नक्षत्र यदि जन्मकाल में हों तो अशुभ फल देते हैं ॥१९४॥

कृत्तिका, रोहिणी, आर्द्रा, ज्येष्ठा, मूला, श्रवण, अनुराधा, मघा और तीनों पूर्वा, तीनों उत्तरा—ये मध्यम नक्षत्र कहे गये हैं ॥१९५॥

सोम, बुध, गुरु, शुक्र—ये चार ग्रह शुभ होते हैं। रवि, मंगल, शनि—ये अशुभ वार हैं अर्थात् शुभ वार में जन्म शुभफलद अन्यथा अशुभफलदायक होता है ॥१९६॥

नन्दा, भद्रा, जया, और पूर्णा ये तिथियां शुभ होती हैं । द्वादशी आदि तथा रिक्ता—इनको सभी शुभ कार्यों में त्याग देना चाहिये ॥१९७॥

शुभ तिथि, शुभ नक्षत्र, और शुभ वार में जिस मनुष्य का जन्म हो और लग्न का त्रिकोण वा उच्च ग्रहों से सम्बन्ध हो तो वह मनुष्य सात्त्विक राजा होता है ॥१९८॥

---

1. ०दायिनी for दायिनः A, A[1]. 2. मध्यं सर्वोत्तरात्रिकम् A., A[1]. 3. ०र्वारा for ०र्वारो A. 4. विपरीताः सतां मताः for विपरीतः समासतः । A, Bh.

वर्षादौ दिवसादौ तु यस्य जन्म प्रवर्तते ।
स दीर्घायुर्बुधैर्वाच्यो ज्योतिःशास्त्रानुसारिभिः [1] ॥१९९॥
त्रिलोकीतिलकः प्राज्यप्रभावोऽतिशयाधिकः [2] ।
तीर्थकृतपूज्यपुण्यात्मा मध्यरात्रोद्भवः पुमान् ॥२००॥
द्वौ प्रहरौ घटिकाहीनौ द्वौ प्रहरौ घटिकाधिकौ ।
विजया [3] नाम योगोऽयं सर्वकार्यप्रसाधकः ॥२०१॥ [4]
वर्षान्ते दिवसान्ते च यस्य जन्म ध्रुवं भवेत् ।
अल्पायुः स च विज्ञेयो दिव्यशास्त्रविचक्षणैः ॥२०२॥
मासमध्येषु [5] यत्संख्यदिवसे जायते पुमान् [6] ।
तत्संख्यवर्षभुक्तौ तु लक्ष्मीर्भवति निश्चितम् ॥२०३॥

---

वर्षादि एवं दिनादि में जिस मनुष्य का जन्म हो, ज्योतिःशास्त्र-वेत्ताओं को उसे दीर्घायु कहना चाहिये ॥१९९॥

जिस मनुष्य का जन्म मध्यरात्रि में अर्थात् १२ बजे रात को हो वह त्रैलोक्यश्रेष्ठ, महाप्रतापी, महातेजस्वी, तथा तीर्थस्थानों में जाकर पुण्य करने वाला होता है ॥२००॥

१२ बजे के एक घटी पहले से लेकर १२ बजे के बाद १ घटी तक का समय विजय नाम वाले योग का होता है जो सभी कार्यों को सिद्ध करता है ॥२०१॥

वर्षान्त अथवा दिनान्त में जिसका जन्म हो वह निश्चय ही अल्पायु होता है । ऐसा दिव्य शास्त्रज्ञों ने बतलाया है ॥२०२॥

जिस किसी भी मास के जितने दिन में शिशु उत्पन्न हों उसके जन्म से उतने वर्ष में निश्चय ही लक्ष्मी की वृद्धि होती है ॥२०३॥

---

1. ०शास्त्रविशारदैः for ०शास्त्रानुसारिभिः A¹. 2. ०शयाकुलः for ०शयाधिकः A. A¹. 3. विजयो for विजया A, Bh. 4. सर्वकार्याणि साधयेत् for सर्वकार्यप्रसाधकः A, A¹. ०कार्यार्थ० for ०कार्य प्र० Bh. 5. ०तु for ०षु Bh. 6. यत्संख्ये दिवसे जन्म जायते for यत्संख्यदिवसे जायते पुमान् A.

शनिश्चरे सदा दुःस्थो बुधे जातो [1]महाजडः।
मातृभिर्गुरुभिः[2] सार्द्धं हृदये कुटिलः कटुः ॥२०४॥
उत्तमतिथिसंयोगे रविवारोदये पुनः[3] ।
स्त्रीलग्ने स्त्रीगृहे[4] चैव नारी पुण्यवती मता ॥२०५॥
उत्तमतिथिसंयोगे रविवारोदये पुनः ।
क्वापि सुखी क्वचिद्दुःखी[5] जायते कटुभाषकः ॥२०६॥
महाभोगी महाचक्षुः स्त्रीषु लोलाङ्गनाप्रियः ।
सुभगः पात्रभूतश्च शुक्रे शुक्राधिको मतः ॥२०७॥
महाभोगी महात्यागी गुरुभक्तो गुरुप्रियः
निजक्षेत्रे गुरौ जातः पात्रभूतः पुमान् पुनः ॥२०८॥
अश्विन्याद्युत्तमे स्थाने जातो भवति पुण्यवान् ।
मध्येषु[6] कृत्तिकाद्येषु भरण्यादिषु दुर्गतः ॥२०९॥

---

शनिश्चर वार में उत्पन्न बालक सर्वदा दुःखावस्था में रहता है। बुध में महाजड़ और अपने माता, गुरुओं के साथ कौटिल्यपूर्वक व्यवहार करने वाला होता है ॥२०४॥

उत्तम तिथि के साथ रविवार का संयोग हो और कन्या लग्न तथा कन्या राशि रहे तो पुण्यवती कन्या का जन्म कहना चाहिये ॥२०५॥

रविवार में उत्तम तिथि के संयोग रहने पर भी उत्पन्न शिशु कभी सुखी कभी दुखी कभी कटुभाषी होता है ॥२०६॥

शुक्रवार में उत्तम तिथि के संयोग रहने पर महाभोगी, दिव्यचक्षु, सुन्दर स्त्रियों का प्रेमी तथा स्वयं भी सुन्दर और पुष्ट वीर्य वाला योग्य होता है ॥२०७॥

बृहस्पति वार में शुभतिथियों के संयोग रहने पर बालक महाभोगी, त्यागशील, गुरुभक्त, गुरुप्रिय तथा सुपात्र होता है ॥२०८॥

अश्विनी आदि उत्तम नक्षत्रों में उत्पन्न बालक पुण्यवान् होता है। कृत्तिकादि उक्त मध्यम नक्षत्रों में मध्यम और भरणी आदि अधम नक्षत्रों में अधम होता है ॥२०९॥॥

---

1. जडः पुमान् for महाजडः A. A[1]. 2. मातृभिः पितृभिः for मातृभिर्गुरुभिः A, A[1]. 3. तनुः for पुनः A. 4. ग्रहे for गृहे A. 5. कश्चिद्दुःखी सुखी क्वापि A, A[1]. 6, मध्यमा for मध्येषु Amb.

पृच्छायां गौरगात्राणां यत्र मासे[1] गुरोर्भवेत् ।
उदयस्तत्र मासे स्यादुदयोऽस्तेऽस्तमादिशेत् ॥२१०॥

पृच्छायां श्यामगात्राणां यत्र मासे कवेर्[2]भवेत् ।
उदयस्तत्र मासे स्यादुदयोऽस्तेऽस्तमादिशेत् ॥२११॥

घातव्रणितगात्राणां यत्र मासे कुजोदयः ।
उदयस्तत्र मासे स्यात् पुंसामस्तेऽस्तमादिशेत्[3] ॥२१२॥

पृच्छायां भिन्नगात्राणां यत्र मासे बुधोदयः ।
उदयस्तत्र मासे स्यात् पुंसामस्तेऽस्तमादिशेत्[4] ॥२१३॥

उदयात्पृष्ठलग्ने[5] चेत् पृच्छायां पृच्छकस्य च ।
न स्यात् पृच्छार्थसम्पत्तिस्ततो लग्नान्तरे पुनः ॥२१४॥

---

प्रश्न करते समय यदि प्रश्न करने वाला गौर वर्ण का रहे तो गुरु का उदय जब हो उस समय प्रश्न कर्ता का भाग्योदय और गुरु के अस्त समय पर अस्त कहना चाहिये ॥२१०॥

यदि प्रश्नकर्ता श्यामवर्ण का हो तो शुक्रोदय के महीने उसका उदय और शुक्रास्त के महीने उसका अस्त कहना चाहिये ॥२११॥

यदि प्रश्नकर्ता घात तथा व्रणों से युक्त शरीर वाला हो तो मङ्गलोदय के समय उसका उदय और मङ्गलास्त के समय उसका अस्त कहना चाहिये ॥२१२॥

यदि प्रश्नकर्ता छिन्न भिन्न शरीर वाला हो तो बुध के उदयकाल में उसका उदय और अस्तकाल में अस्त कहना चाहिये ॥२१३॥

प्रश्नकर्ताओं के प्रश्न के समय यदि पृष्ठोदय लग्न हो तो अभीष्ट सिद्धि नहीं होती । अन्य लग्नों में होती है ॥२१४॥

---

1, मासेन for मासे; the addition of न is redundant 2. कवि for कवे Amb. 3. For ०मस्तेऽस्तमादिशेत् A. reads मस्ते च दुर्गतिः 4. A. A[1] add here : आतंकं भग्नगात्राणां यत्र मासे शनेर्भवेत । उदयस्तत्र मासे स्यात्पुंसामस्ते च पूर्ववत । Bh. reads आतंकरूग्णगात्राणां यत्र मासे शनिर्भवेत । etc. 5. पृष्टलग्नं for पृष्ठलग्ने A. Amb, चतुर्पतिः Bh. षष्ठे लग्ने for पृष्ठलग्ने Bh.

आतङ्करुग्णगात्राणां यत्र मासे शनेर्भवेत् ।
उदयस्तत्र मासे स्यात्तु सामस्ते च दुर्गतिः[1] ॥२१५॥
पृच्छाकाले यदा स्वामी विलग्नस्योदयं भजेत्[2] ।
तदा सिद्धिर्बुधैर्वाच्या प्रष्टुर्मनसि या स्थिता ॥२१६॥
पृच्छाकाले यदा खेटा उदयं यान्ति भावपाः ।
अभ्युदयस्तदा वाच्यः प्रष्टुर्ग्रामपदादिभिः[3] ॥२१७॥
पृच्छाकाले चतुर्णां च कंटकानामिना यदि ।
एककालमुदीर्यन्ते[4] तदा प्रष्टुर्महोदयः ॥२१८॥
पृच्छायां गोचरे शुद्धिर्यदा काले प्रजायते ।
प्रष्टुरभ्युदयो वाच्यः शुभभाववशात्पुनः ॥२१९॥
पृच्छायां राशिनाथस्य यदा दशा शुभा भवेत् ।
प्रष्टुस्तदोदयो देश्यो राशेरपि प्रमाणतः ॥२२०॥

---

यदि प्रश्न करने वाला भीत वा रोगी हो तो शनि का जिस मास में उदय हो उस मास में उदय और अस्त के समय अस्त कहना चाहिये ॥२१५॥

प्रश्नकाल में यदि लग्नेश लग्न में रहे तो प्रश्नकर्ता की मनोगत बातों की सिद्धि होती है ॥२१६॥

प्रश्नकाल में जिन २ भावों के स्वामी जिस जिस समय में उदय होंगे उसी २ समय में प्रश्नकर्ता का ग्राम, पद, आदि विषयों का अभ्युदय कहना चाहिये ॥२१७॥

प्रश्नकाल में चारों केन्द्रस्थानों के स्वामी जब एक ही काल में उदित हों तब प्रश्नकर्ता का महान अभ्युदय कहना चाहिये ॥२१८॥

प्रश्नकाल में गोचरशुद्धि देखनी चाहिये । गोचरशुद्धि जब हो उस समय शुभ भाव के सम्बन्ध से प्रश्न करने वाले का अभ्युदय कहना चाहिये ॥२१९॥

प्रश्नकाल म राशीश की दशा जब शुभ हो, तब राशि के भी प्रमाण से प्रश्न करने वाले का अभ्युदय कहना चाहिये ॥२२०॥

---

1. चतुर्गतिः for च दुर्गतिः Amb. 2. व्रजेत for भजेत् A, A[1] लग्नस्योदयतां भजेत् for विलग्नस्योदयं Bh. 3. मास for ग्राम A. 4. मुदियन्ते for मुदीर्यन्ते A[1].

नाथोऽद्ये[1] दशा सौम्या गोचरे शुद्धिरुत्तमा ।
शकुनैः शोभनैर्जातैर्भवेत्पुंसां महोदयः ॥२२१॥
लग्नेशेऽभ्युदिते वाच्यं मासाब्दं तिथिलग्नभम्[2] ।
वयो वर्णं दिशां भाग्यं[3] त्रैलोक्यं च सदोदितम् ॥२२२॥
भावा अभ्युदिता[4] ज्ञेयाः दशा अपि[5] धनादयः ।
विपरीते विपर्यस्तं सर्वं ज्ञेयं धनादिकम् ॥२२३॥
सिंहलग्ने समायाते लग्नं पश्यति सिंहपे[6] ।
साम्राज्यं जायते पुंसां सिंहस्येव पराक्रमः ॥२२४॥
यो यो नाथयुतो दृष्टो भावः सौम्ययुतो[7]ऽथवा ।
समृद्धिस्तस्य तस्यैव पापैरेवं विपर्ययः ॥२२५॥
आद्यं [8]भूदयकंटकं क्षितिगृहं पातालकेन्द्रं पुनः

प्रश्नकाल में जिस भाव का स्वामी उदित हो और गोचर शुद्धि उत्तम हो उसकी दशा शुभ होती है। इस स्थिति में यदि शुभ शकुन हो तो प्रश्नकर्ता का महान अभ्युदय कहना चाहिये ॥२२१॥

प्रश्नकाल में लग्नेश यदि उदित हों तो वह मास, वर्ष, तिथि लग्न, वय. वर्ण, भाग्य और त्रैलोक्य उसके लिये उदित रहते हैं ॥२२२॥

धनादि भावेशों के उदित रहने पर उनकी उदित दशा में धनादि विषयों का अभ्युदय कहना चाहिये और विपरीत होने पर उन विषयों की अवनति कहना चाहिये ॥२२३॥

प्रश्नकाल में सिंह लग्न हो, सिंह का स्वामी ( सूर्य ) लग्न को देखता हो तो प्रश्नकर्त्ता को साम्राज्य की प्राप्ति तथा सिंह के समान पराक्रम होता है ॥२२४॥

जो जो भाव अपने स्वामी तथा शुभ ग्रह से युक्त तथा उससे देखा गया हो प्रश्नकर्ता की उस उस भाव में समृद्धि होती है। यदि वही पापग्रह से युक्त वा दृष्ट हो तो अशुभ फल देता है ॥२२५॥

1. माघोदये for नाथोदये A. Amb. 2. मासाब्दं तिथिलग्नभम् for मासाब्दतिथिलग्नपात् Amb. 3, वर्गवर्णदशां भावाः for वयो वर्णं दिशां भाग्यं Amb. दिशां भावाः Bh. दिशां भाग्यं 4. अप्युदिता for अभ्युदिता A, A¹. 5. द्वादशापि for दशा अपि A. 6, लग्नपे for सिंहपे Bh. 7. सौम्यैर for सौम्य A. 8. तू for भू Amb.

स्त्रीकेन्द्रं च तृतीयकं बुधजनैर्हर्षाख्यकेन्द्रं स्मृतम् ।
अभ्राख्यं दशमं मतं सुमनसां क्षोणीन्द्रकेन्द्रं पदं
पुष्टास्ते किल कण्टका बलयुता यच्छन्ति पूर्णं फलम् ॥२२६॥

तन्वादिसप्तमं[1] यावदुत्तरो[2] भाव उत्तमः ।
सप्तमं[3] प्रथमं यावद्दक्षिणस्त्वबलोऽधमः[4] ॥२२७॥
आद्याः[5] केन्द्रगताः खेटाः समस्ता उदिता मताः ।
अस्तकेन्द्रस्थिता[6]स्सर्वेऽप्यस्तमिताः शुभाशुभाः ॥२२८॥
पातालेऽप्युत्तमाः प्रोक्ता आकाशे मध्यमाः स्थिताः ।
उत्तरेऽभ्युदिता ज्ञेया विशेषेण बलाधिकाः ॥२२९॥
दक्षिणेऽप्युत्तमे[7] भागे बलहीना ग्रहा मताः ।
एवं लग्नबलं ज्ञात्वा विलग्ने फलमादिशेत् ॥२३०॥

---

केन्द्र पहला, चौथा, सातवां, दशवां कहलाते हैं । उसमें पहला उदयकंटक और क्षितिगृह, दूसरा पातालकेन्द्र, तीसरा, स्त्रीकेन्द्र और हर्षकेन्द्र चौथा अर्थात दशम स्थान को अभ्राख्यकेन्द्र वा क्षोणीन्द्रकेन्द्र कहते हैं । यदि ये स्थान सबल पुष्ट रहें तो पूर्ण फल को देते हैं ॥२२६॥

केन्द्रों में लग्न से सप्तम तक उत्तर भाव कहलाते हैं । वह उत्तम हैं और सप्तम से प्रथम तक दक्षिण भाव कहलाते हैं वह अधम अबल होते हैं ॥ २२७ ॥

पहले केन्द्रस्थित सब ग्रह उदित कहलाते हैं । और सप्तमकेन्द्र में स्थितग्रह शुभ अशुभ कहलाते हैं ॥२२८॥

पातालकेन्द्र में स्थित ग्रह उत्तम कहलाते हैं और दशम में मध्यम कहलाते हैं । उत्तर में स्थित ग्रह अभ्युदित कहलाते हैं उनमें बल भी होता है ॥२२९॥

दक्षिण में उत्तम भाग में रहने पर भी ग्रह बलहीन होते हैं । इस प्रकार लग्न जान कर फलादेश कहना चाहिये ॥२३०॥

---

1. तन्वादि for तन्वादि Amb. 2. दुत्तमो for दुत्तरो Amb. 3. सप्तमात् for सप्तमं Amb. 4. ऽधनः for ऽधमः Amb. 5. आद्याः for अथ Amb. 6. गता० for स्थिता A. 7. ०त्वधमा for प्युत्तमे A., Bh.

पृच्छालग्नेषु सर्वेषु जन्मपत्र्यां विचक्षणैः ।
केन्द्रस्थग्रहयोगेन[1] फलं वाच्यं मनीषिणा ॥२३१॥
आद्यकेन्द्रैर्ग्रहैर्जातः[2] पुण्यवान् पुरुषः स्मृतः ।
अस्तग्रहैर्[3] नभस्थैर्वा हीनो भवति मूर्तितः ॥२३२॥
कोऽत्र[4] वर्षः शुभोऽस्माकमिति प्रश्ने समागते ।
तत्ताजिकानुसारेण कीर्त्यते वर्षलक्षणम्[5] ॥२३३॥
जन्मतः प्रथमे लग्ने जन्मकालगतैर्ग्रहैः ।
वर्षं यावत्फलं ज्ञेयं[6] जन्मपत्र्यां विचक्षणैः ॥२३४॥
द्वितीये वत्सरे वाच्यं[6] द्वितीयलग्नतः फलम् ।
तृतीये वत्सरे[7] ज्ञेयं तृतीयादपि लग्नतः ॥२३५॥
एवं द्वादश वर्षाणि जन्म द्वादश लग्नतः ।
जन्मकालगतैरेव ग्रहैर्वाच्यं शुभाशुभम् ॥२३६॥

---

इस प्रकार जन्मपत्री तथा प्रश्नकुण्डली में भी केन्द्रस्थित ग्रह यदि बली हों तो शुभ अन्यथा विपरीत फल कहना चाहिये ॥२३१॥

आद्यकेन्द्र अर्थात् लग्न और चतुर्थ में स्थित ग्रह से बालक को पुण्यवान कहना चाहिये । सप्तम और दशमस्थ ग्रहों से उससे हीन कहना चाहिये ॥२३२॥

कौन सा वर्ष मेरे लिये शुभप्रद है इस प्रकार के प्रश्नों के लिये ताजिक के अनुसार वर्षफल कहा जाता है ॥२३३॥

जन्म कालिक लग्न से जिस घर में जो ग्रह स्थित हो उसके अनुसार एक वर्ष तक फल कहना चाहिये ॥२३४॥

इसी प्रकार द्वितीय वर्ष में द्वितीय स्थान से, तृतीय वर्ष में तृतीय स्थान से फलादेश कहना चाहिये ॥२३५॥

इस प्रकार जन्म लग्न से बारह स्थानों के द्वारा जन्म कालिक ग्रहों से बारह वर्ष तक शुभ और अशुभ फल कहना चाहिये ॥२३६॥

---

1. केन्द्रस्थ for केन्द्रस्था A. 2. केन्द्रगतैः खेटैः for केन्द्रैर्ग्रहैर्जातः A. 3. गतै for ग्रहै A 4. कोऽस्ति for कोऽत्र A. 5. वर्षजं फलम् for वर्षलक्षणम् A., Bh. 6. वाच्यं for ज्ञेयं A[1]. 7. The portion beginning with वाच्यं and ending with वत्सरे is missing in A.

द्वादश नवका यावदष्टोत्तरशतं भवेत् ।
एवमायुषि सम्पूर्णे नवा वार्ता[1] भवन्ति हि ॥२३७॥
मेषसंक्रान्तिकाले च वर्षे पूर्णेऽखिलेऽपि हि ।
धनानुजादयो भावाः पुनर्लग्नीभवन्त्यमी[2] ॥२३८॥
जन्मकालगताः खेटाः सन्तिष्ठन्ति तथैव हि ।
मुथहासंज्ञितं लग्नं वर्षलग्नं[3] भवेदिदम् ॥२३९॥
मेषसंक्रान्तिकाले हि[4] वर्षलग्नं प्रवर्तते ।
जन्मकालग्रहैरेव पुनर्वर्षफलं वदेत् ॥२४०॥
सर्वे तन्वादयो भावाः शुभयुक्ता बलावहाः[5] ।
क्रूरयुक्ताश्च ते दृष्टा विपरीतफलप्रदाः ॥२४१॥
उदयात्पञ्चमं यावदवस्था प्रथमा समा ।
पञ्चमान्नवमं यावदवस्था हि द्वितीयका ॥२४२॥

इस प्रकार बारह भावों को ९ बार करके १०८ वर्ष होते हैं। सम्पूर्ण आयु में बारह भावों के नौ चक्र होते हैं ॥२३७॥

मेष संक्रान्ति के समय वर्षपूर्ति हो जाने पर फिर धन, भ्रातृ आदि भाव और लग्न बन जाते हैं ॥२३८॥

जन्म काल में जैसे ग्रह स्थित होते हैं । वैसे ही पहले वर्ष में वर्षकुण्ड में भी होते हैं और वर्ष लग्न ही मुथहा कहलाते हैं ॥२३९॥

मेष संक्रान्ति काल में जिसका वर्ष बदलता है उसको उसी काल का लग्न तथा ग्रह से वर्षफल कहा जाता है ॥२४०॥

सभी तनु आदि भाव शुभ ग्रहों से युत हों तो बलिष्ठ होकर शुभ फल देते हैं। वे ही यदि पाप ग्रहों से युक्त देखे जाते हों तो विपरीत फलदायक होते हैं ॥२४१॥

लग्न से पञ्चम भाव तक प्रथम अवस्था कहलाती है। पञ्चम भाव से नवम भाव तक दूसरी अवस्था होती है ॥२४२॥

1. नवावर्ता for नवा वार्ता A., Bh. 2. भवन्ति ते for भवन्त्यमी A. 3. वर्षलग्नं is missing in the text. 4. च for हि A. 5. शुभा० for बला० A.

नवमात्प्रथमं यावदवस्था स्यात्तृतीयका ।
अर्द्धपञ्चमसन्धौ हि पूर्वं पूर्वं[1] पतन्त्यधः ॥२४३॥
पञ्चमान्नवमं यावत्तन्वादिषु शुभैर्ग्रहैः[2] ।
जन्ममध्ये च यस्यैवं[3] सौख्यं भवति निश्चितम् ॥२४४॥
उदयात्पञ्चमं यावज्जन्मपत्र्यां शुभग्रहैः ।
वयसि प्रथमे सौख्यं प्रष्टुर्वाच्यं नवं नवम् ॥२४५॥
नवमात्प्रथमं यावत् सर्वभावे शुभग्रहैः ।
वृद्धत्वेऽपि हि जन्तूनां[4] सर्वसौख्यं प्रवर्तते ॥२४६॥
अवस्थात्रये सौम्याश्चेद्वाच्यं वयस्त्रये[5] सुखम् ।
यत्र[6] वयसि तुङ्गाश्चेद्राज्यलक्ष्मीप्रदा मताः ॥२४७॥

नवम भाव से प्रथम भाव तक तीसरी अवस्था होती है और आधे की सन्धि से पञ्चम भाव की सन्धि तक पहली अवस्था में परिगणित होती है। और उससे नवम भाव की सन्धि तक दूसरी अवस्था, उस से आगे तृतीय अवस्था में परिगणित होती है ॥२४३॥

जन्मकाल में पञ्चम से नवम तक तन्वादि भावों में यदि शुभ ग्रह हों तो उसे निश्चित ही सुख प्राप्ति होती हैं ॥२४४॥

जन्म लग्न से पञ्चम तक यदि शुभ ग्रह पड़े हों तो बालक को प्रथम अवस्था में कुछ नए प्रकार का सुख होना चाहिये ॥२४५॥

नवम भाव से प्रथम भाव तक यदि सभी भावों में शुभ ग्रह पड़े हों तो वृद्धावस्था में भी सुखप्राप्ति होती है ॥२४६॥

तीनों अवस्थाओं में यदि शुभग्रह हों तो बाल्य, युवा और वृद्ध इन तीनों अवस्थाओं में सुख कहना चाहिये । किन्तु जिस अवस्था में शुभ ग्रह अपनी उच्च अवस्था में हों तो उस में राज्यलक्ष्मी होती है ॥२४७॥

1. पूर्वैः पूर्वैः for पूर्वं पूर्वं A. 2. शुभग्रहैः A. 3. जन्ममध्यमयस्यैव for जन्म मध्ये च यस्यैवं A. 4. सम्प्राप्ते for जन्तूनां 5. मये 6. यस्मिन् for यत्र A.

आद्यावस्था गतास्तुङ्गा राज्यमाद्यवयोगतम्[1] ।
मध्यावस्थागतास्तुङ्गा यौवने राज्यदाः स्मृताः ॥२४८॥
अन्त्यावस्थागतास्तुङ्गा वार्द्धके राज्यदा मताः[2] ।
आद्यावस्थास्थिताःक्रूरा बाल्ये दारिद्रयदाः स्मृताः ॥२४९॥
मध्यावस्था यदा[3] क्रूरा यौवने दौःख्यदायकाः[4] ।
अन्त्यावस्थागताः क्रूरा अन्ते[5] वयसि दुःखदाः ॥२५०॥
एवं ग्रहानुमानेन सुखदुःखं[6] सतां[7] भवेत् ।
यस्मिन् वयसि तुङ्गाश्चेन्मुदिताः सौख्यसंयुताः[8] ॥२५१॥
तत्र राज्यं सुखं लक्ष्मीस्तेजो भवति निश्चितम् ।
यस्मिन् वयसि मन्दाः स्युः क्रूरदृष्टा विरश्मिकाः[9] ॥२५२॥

---

यदि आद्य अवस्था में उच्च के ग्रह रहें तो बाल्य अवस्था में ही राज्यप्राप्ति होती है । यदि वे मध्यावस्था में उच्च के हों तो युवावस्था में राज्यप्रद होंगे ॥२४८॥

यदि अन्त्यावस्था में उच्च ग्रह हों तो वृद्धावस्था में राज्यप्राप्ति होती है । आद्यावस्था में यदि क्रूर ग्रह हों तो बाल्यकाल में उसे दरिद्र कहना चाहिये ॥२४९॥

मध्यावस्था में यदि पापग्रह हों तो उस पुरुष की यौवनावस्था में दुःख देने वाले होते हैं । अन्त्यावस्था में यदि पापग्रह हों तो बुढ़ापे में भी दुःख देने वाले होते हैं ॥२५०॥

इस प्रकार ग्रह स्थिति के अनुसार सुख दुःख सदा कहना चाहिये । जिस किसी भी अवस्था में उच्च के ग्रह हों उस अवस्था में प्रसन्न एवं सुखपूर्ण हों ॥२५१॥

उस समय मनुष्य को राज्य, सुख, लक्ष्मी, तेज आदि निश्चय से होते हैं । जिस अवस्था में स्वयं भी पापग्रह अन्य पापग्रहों से देखे जाँय तथा सूर्य में प्रवेश कर जांय ॥२५२॥

---

1. वयोचितम् for वयोगतम् A. 2. स्मृताः for मताः A. 3. गताः for यदा A 4. दौस्थ्य for दौःख्य A. 5. मन्दास्त्वन्ये A. 6. सुखं for सुख A. 7. सदा for सतां A. 8. सौम्य for सौख्य A. 9. विरस्मिताः for विरश्मिकाः Amb.

तत्र हानी रुजातंकः पदभ्रंशः खलागमः ।
लग्ने तुंगे महालक्ष्मीस्तूर्यगे च[1] धनागमः ॥२५३॥
तुंगे[2] जायास्तगे खेटे खे तुंगे[3] राज्यसंपदः ।
खेटोदयानुमानेन फलवर्षे फलं[4] मतम् ॥२५४॥

॥ इति वर्षफलम् ॥

श्रीहेमशालिनां योग्यमप्रभीकृतभास्करम्[5] ।
सूक्ष्मेक्षिकया चक्रेऽरिभिः शास्त्रमदूषितम् ॥२५५॥

## अथ निधानप्रकरणम् ।

एकाकिन्यपि तुर्येंशे तुर्यं पश्यति वा स्थिते ।
अवश्यं विभवस्तत्र विद्यते कृतनिश्चयः ॥२५६॥
एकाकिन्यपि शीतांशौ तुर्यं पश्यति वा स्थिते ।
क्षीणे वास्तमिते चापि ध्रुवं ज्ञेयो निधिर्गृहे ॥२५७॥

---

तो मनुष्य को हानि, रोग, भय, स्थानभ्रंश, दुष्टरोग आदि होते हैं। उच्च का ग्रह यदि लग्न में हो तो धनप्राप्ति होती है ॥२५३॥

यदि ग्रह उच्च का होकर जायागृह हो अथवा स्वोच्चस्थ ग्रह दशम में रहे तो राज्यप्राप्ति होती है। इस प्रकार ग्रहों के उदयमान से वर्ष फल कहना चाहिये ॥२५४॥

ऐश्वर्य चाहने वालों के योग्य, अपनी प्रभा से सूर्य की प्रभा को तिरस्कृत करने वाले, तथा शत्रुओं से अदूषित इस शास्त्र को श्रीहेमसूरि ने सूक्ष्म विचार से किया ॥२५५॥

अकेला भी कोई ग्रह चौथे स्थान में वा उसके नवांश में रहे वा उस स्थान को देखे तो अवश्य ही सम्पत्ति का लाभ होता है ॥२५६॥

अकेला क्षीण वा अस्त भी चन्द्रमा चतुर्थ स्थान को देखे वा उसमें रहे तो उसके घर में अवश्य निधि होती है ॥२५७॥

---

1. तुर्ये तुंगे for तुर्यगे च A, 2 तुंगा for तुंगे A. 3. तुंगं for तुंगे A. 4. फलं वर्षे फले for फलवर्षे फलं A., Bh. 5. प्रतीकृत for ०प्रभीकृत A.

स्थानत्रयेषु सौम्याश्चेन्निधिः स्थानत्रये मतः ।

धनस्थाने बलं[1] द्रव्यं तुर्यगेहे महानिधिः ॥२५८॥

छिद्रस्थाने च पूर्वेषामतीतानां महानिधिः ।

[2]शुभखेटानुसारेण रूप्यस्वर्णादि[3] निर्णयः ॥२५९॥

क्रूरे तूर्यपतौ द्रव्यं विद्यते लभ्यते नहि ।

क्षीणचन्द्रेऽपि तूर्यस्य[4] लभ्यते तत्र वत्सरे ॥२६०॥

जायायां[5] छिद्रगेहे वा मंगलो यदि खेचरः ।

तदा शत्रु[6]हतानां चाप्यतीतानां निधि[7]र्ध्रुवम् २६१॥

राहुशनी मृतौ भावपृच्छायां खेचरौ क्रमात् ।

व्यन्तरत्वं गतानां च द्रव्यं भवति निश्चितम् ॥२६२॥

---

तीन स्थानों में यदि शुभ ग्रह हों तो घर के तीन स्थानों में निधि होती है । धनस्थान में रहें तो सेना और द्रव्य, चतुर्थ स्थान में रहें तो महासम्पत्ति कहनी चाहिये ॥२५८॥

अष्टम स्थान में यदि शुभ ग्रह हों तो अपने पूर्वजों की महा निधि कहनी चाहिये । इस प्रकार शुभ ग्रहों के अनुसार रुपये सोने आदि का पता लगाना चाहिये ॥२५९॥

पाप ग्रह यदि चतुर्थ स्थान के स्वामी हो तो द्रव्य अवश्य हो, पर मिले नहीं । यदि क्षीण चन्द्र भी चतुर्थ स्थान का स्वामी हो तो उस वर्ष में धनप्राप्ति होती है ॥२६०॥

सप्तम वा अष्टम स्थान में यदि मंगल हो तो युद्ध में मृत पूर्वजों की निधि अवश्य होती है ॥२६१॥

प्रश्नकाल में राहु और शनि यदि अष्टम भाव में हो तो मृत पूर्वजों का द्रव्य होना निश्चित कहा गया है ॥२६२॥

---

1. च तद् for बलं A. 2. शुभे for शुभ A, 3. स्वर्णारूप्यादि for रूप्यस्वर्णादि A. 4. तत्रस्थे for तूर्यस्य A, तूर्यस्मे Bh. 5. The text reads जातायां A. 6. शास्त्र for शत्रु A. शस्त्र Bh. 7. विधि० for निधि A.

निधिप्रश्ने विलग्ने चेद्राहुर्भवति खेचरः ।
छिद्रे रविस्तदा वाच्यं निधानं नैव लभ्यते ॥२६३॥
प्रश्नकाले यदा मूर्तौ तुर्ये वा सप्तमेऽपि वा ।
दशमे वा भवेत् शुक्रो निधिरस्तीति निश्चितम् ॥२६४॥
मूर्तौ वा तुर्यगे वापि सप्तमे च[1] गृहे यदि ।
दशमे वा भवेज्जीवः सचन्द्रो निधिदायकः ॥२६५॥
सजीवे चन्द्रशुक्रे वा[2] तुर्ये गेहे धनं भवेत् ।
सरत्नहाटकं रूप्यं घटिताघटितं भवेत् ॥२६६॥
बुधश्चन्द्रो गुरुः शुक्रो धने वा हिबुकेऽथवा[3] ।
प्रयच्छन्ति निधिं स्वीये[4] चान्यं या बलशालिनः ॥२६७॥
छिद्रस्थाने स्थितास्त्वेतेऽपत्ये[5] वा खेचरा धनम् ।
निधिं यच्छन्ति पूर्वेषां विना[6] नैवेद्यपूजनात् ॥२६८॥

---

निधि प्रश्न में यदि राहु लग्न में हो और सूर्य अष्टम स्थान में हो तो निधिलाभ नहीं कहना चाहिये ॥२६३॥

प्रश्नकाल में यदि लग्न में, चौथे, सातवें तथा दसवें स्थान में शुक्र रहे तो निधि अवश्य ही कहनी चाहिये ॥२६४॥

प्रश्नकाल में यदि केन्द्रस्थान में गुरु हो और वह चन्द्रमा से युक्त हो तो निधि अवश्य मिले ॥२६५॥

चन्द्र और शुक्र, गुरु के साथ चौथे स्थान में रहें तो उसके घर में अवश्य धन रहे । उसके पास रत्न, सुवर्ण आदि मूल तथा अलंकार अवस्था में रहें ॥२६६॥

बली बुध, चन्द्रमा, गुरु वा शुक्र धनस्थान वा चतुर्थ स्थान में रहें तो उसे अपनी या अन्य की निधि प्राप्त हो ॥२६७॥

अष्टम वा पञ्चम स्थान में ग्रह रहें तो उनकी बिना बलि तथा नैवेद्य द्वारा पूजा से ही पूर्वजों की निधि प्राप्त होती है ॥२६८॥

---

1. वा for च A. 2. च for वा A. 3. ऽपिवा for अथवा A. 4. स्वीयं for स्वीये A. 5. ष्यन्ये for ऽपत्ये A. 6. बलि for विना A.

यत्र शुक्रः क्षितौ तत्र चक्रमध्ये निधिः स्थितः[1] ।
शुक्रदृष्टे पुरो वापि गेहे[2] खण्डं विलोकयेत् ॥२६९॥
यत्र गुरुः क्षितौ तत्र चक्रकोणे निधिः पुरः ।
यत्र खेटा [3]धनाभावे तत्रावश्यं निधिर्बहुः ॥२७०॥
तुर्यंशः केन्द्रमध्यस्थोऽपथ [4]एकनिधिस्तदा ।
तुर्यंशो बाह्यराशौ वा गृहाद्बहिर्निधिः पुनः ॥२७१॥
यत्र लाभे भवेत् शुक्रः स्वकीयं स्वजनस्य वा ।
स्थापितं[5] वा प्रनष्टं वा लभ्यते बहुलं धनम् ॥२७२॥
बुधे चन्द्रे भवेल्लाभो जीवयुक्ते विशेषतः ।
शुक्रयुक्ते महालाभः प्रतिवेश्म निधेरपि ॥२७३॥
ऊर्ध्वदृष्टौ[6] भवेदूर्ध्वं मालादावुपरिसंस्थितम्[7] ।
अधोदृष्टावधोवस्तु समदृष्टौ सदेशके ॥२७४॥

---

जिसकी कुण्डली में शुक्र लग्न में हो तो घर के बीच में निधि कहनी चाहिये । यदि शुक्र की दृष्टिमात्र हो तो घर के आगे वा घर के किसी भाग में देखनी चाहिये ॥२६९॥

जहां लग्न में गुरु रहे वहां घर के किसी कोने में निधि होती है । यदि धनभाव में ग्रह रहें तो वहां अवश्य प्रचुर धन होता है ॥२७०॥

चतुर्थेश यदि केन्द्र में हो तो कोने में सम्पत्ति कहना, चतुर्थेश यदि बाह्यराशि में हो तो घर से बाहर निधि कहनी चाहिये ॥२७१॥

जहां पर लाभस्थान में शुक्र हो वहां अपना और अपने सम्बन्धियों का रक्खा तथा खोया हुआ पर्याप्त धन प्राप्त होता है ॥२७२॥

लाभ स्थान में बुध वा चन्द्र गुरु से युक्त हों तो विशेष लाभ कहना चाहिये । यदि वही बुध वा चन्द्र शुक्र के साथ हों तो पूर्ण निधि की प्राप्ति होती है ॥२७३॥

ऊर्ध्व दृष्टि रहने पर छत्त आदि ऊपर प्रदेश में, अधोदृष्टि वाले ग्रहों के रहने पर नीच प्रदेश में, सम दृष्टि वाले ग्रहों की दृष्टि से सम प्रदेश में निधि कहनी चाहिये ॥२७४॥

---

1. स्थितिर्निधिः for निधिः स्थितिः A, 2. गेह for गेहे A. 3, घना for धना Bh. 4, ०स्थापवरके for ०स्थोऽपथ एक० Bh. 5. स्थापितं for स्थागितं A. 6. ऊर्द्धदृष्टो for ऊर्ध्वदृष्टौ A[1] 7. मालादुवुपरिसंस्थतम् Bh.

ऊर्द्धदृष्टौ[1] भवेदूर्ध्वमधोधिष्ण्ये च स्वभ्रगम्[2] ।
समदृष्टौ[3] समे गेहे युक्तं वस्तु दिशां[4] क्रमात् ॥ २७५॥
ऊर्ध्वदृष्टौ पदे [5]भिन्नैर्वक्रिते भित्तिमध्यतः ।
ग्रहो यदि दिनैकेन राशिमन्यां[6] यियासति ॥२७६॥
छन्नं मध्ये तदा ज्ञेयं निधानं[7] स्थापितं बुधैः ।
यावन्तः खेचरास्तूर्ये तावत्संख्यो निधिर्मतः ॥२७७॥
यत्संख्ये वर्तते चन्द्रो नक्षत्रे निधिदायकः ।
गृहे निधिश्च तत्संख्ये विज्ञेयः खातशोधने ॥२७८॥
शुक्रे चन्द्रे जलस्थाने देवस्थाने शुभे गुरौ ।
चतुष्पदगृहे सूर्ये चेष्टिकानिचये[8] बुधे ॥२८९॥
भौमे महानसस्थाने शनौ राहौ बहिर्भुवि ।
निधानं गेहमध्ये तु स्थानेष्वेतेषु लक्षयेत् ॥२८०॥

---

ग्रहों की ऊर्ध्व दृष्टि रहने से घर के उच्च प्रदेश में, अधोदृष्टि रहने से कहीं गर्त में और सम दृष्टि से सम प्रदेश में निधि कहनी चाहिये ॥२७५॥

ऊर्ध्वदृष्टि में भित्ति स्थान पर, वक्री होने पर भित्ति के मध्य में पर यदि एक ही दिन में ग्रह दूसरी राशि में जाना चाहे तो ॥२७६॥

मध्य स्थान में निधि को छिपा हुआ कहना चाहिये। चतुर्थ स्थान में जितने ग्रह हों उतने प्रकार की निधि कहनी चाहिये ॥२७७॥

निधि बतलाने वाला चन्द्र जितनी संख्या वाले नक्षत्र में रहे उतनी बार गड्ढा खोदने पर निधि प्राप्त होती है ॥२७८॥

शुक्र वा चन्द्र निधिदायक हों तो जलस्थान में, गुरु यदि हों तो मन्दिर आदि शुभ स्थान में, सूर्य यदि हों तो पशुशाला में, बुध यदि हों तो ईंट के भट्ठों की जगह निधि प्राप्त हो ॥२७९॥

मंगल यदि हों तो पाकालय में, शनि और राहु हों तो घर के बाहर वा घर के बीच निधि को बतलाना चाहिये ॥२८०॥

---

1. ऊर्द्धधिष्ण्ये for ऊर्द्धदृष्टौ A. 2. स्वभ्रके for स्वभ्रगम A., Bh. 3. समधिष्ण्ये for समदृष्टौ A. 4. The text reads दृशं for दिशाम् 5. भिन्ने for भिन्नै A. 6. ०मन्यं for ०मन्यां A. मध्ये Bh. 7. The text reads धनगं for निधानं A. 8. निचये for निचये A., निचयो Bh.

निधिस्थानपतिः स्थाने यावत्संख्येऽवतिष्ठति ।
तावद् हस्तेष्वधोवाच्यं निधानं भूमिखण्डके ॥२८१॥
यावत्संख्येंऽशके चन्द्रे लग्नेशो यत्तमो भवेत् ।
तत्संख्याकरमानेन द्रव्यं[1] भूमिगतं वदेत्[2] ॥२८२॥
शुक्रे चन्द्रे भवेद्रौप्यं बुधे स्वर्णं निधिस्थितम्[3] ।
गुरौ रत्नयुतं [4]हेममादित्ये मौक्तिकं तथा[5] ॥२८३॥
भौमे त्रपु शनौ लोहं राहावस्थि भुवि स्थितम्[6] ।
धातोर्विनिश्चये ज्ञाते विशेषोऽयं ग्रहस्थितः[7] ॥२८४॥
चतुर्थाधिपतौ मध्ये गृहमध्ये[8] भवेद् ध्रुवम् ।
चतुर्थाधिपतौ बाह्ये गृहाद्बहिर्गतं[9] धनम् ॥२८५॥
विलग्नात्सप्तमं यावद्राशयोऽभ्यन्तराः खलु[10] ।
सप्तमात्प्रथमं यावद् बाह्या हि राशयो मताः ॥२८६॥

---

निधि स्थान के स्वामी उस से यत्संख्यक स्थान में रहें उतने हाथ नीचे भूमिखण्ड में निधि कहनी चाहिये ॥२८१॥

चन्द्रमा यत्संख्यक नवांशक मे रहे और लग्नेश लग्न से जितने स्थान पर हो उतने हाथ पर भूमि के अन्दर द्रव्य कहना चाहिये ॥२८२॥

इस प्रकार शुक्र और चन्द्र यदि हों तो रुपये, बुध हों तो सुवर्ण, शुक्र गुरु हों तो रत्न युक्त सुवर्ण और सूर्य के रहने से मोती मिलते हैं ॥२८३॥

मंगल में मूंगा, शनि में लोहा और राहु में पृथ्वीगत हड्डी मिलती हैं। इस प्रकार धातु के निश्चय हो जाने पर ग्रहों से विशेष बातें जाननी ॥२८४॥

चतुर्थ स्थान का स्वामी यदि मध्यस्थान में हो तो घर के अन्दर निधि मिले । यदि चतुर्थेश बाह्यस्थान में रहे तो घर के बाहर निधि मिलती है ॥२८५॥

---

1. निधानं भू० for द्रव्यं भूमि $A^1$. 2. भवेत् for वदेत A. $A^1$ 3. स्वर्णमुदाहृतम् for स्वर्णं निधिस्थितम् A. Bh. 4. सूर्य for हेम० $A.^1$ A 5. मौक्तिकमुच्यते for मौक्तिकं तथा A. $A^1$ मौक्तिकं निधौ Bh. 6. वस्थीति कीर्तयेत् for वस्थि भुवि स्थितम् A. $A^1$. 7. ग्रहोत्थितः for ग्रहस्थितः $A^1$ 8. गृहे मध्ये for गृहमध्ये A. 9. धनं for गतं A. 10. मतः for खलु A.

निधीशलग्ननाथौ द्वौ मध्यराशिस्थितौ यदि ।
तदा द्रव्यं गृहस्यान्तःकोणादिष्वेव संस्थितम् ॥२८७॥
यदा लग्नेशतुर्येशौ बाह्यराशिस्थितौ यदि ।
गृहाद्बहिर्धनं वाच्यं प्रांगणादिभुवि स्थितम् ॥२८८॥
केन्द्रगतैर्ग्रहैर्वाच्यं[1] सर्वाः पूर्वादयो दिशः ।
केन्द्रगे चन्द्रजे ज्ञेयं गृहस्योत्तरदिग्स्थितम् ॥२८९॥
गुरावीशानभागे च रवौ पूर्वदिशि स्थितम् ।
शुक्रेऽप्याग्नेयदिग्कोणे कुजे दक्षिणदिक्श्रयम् ॥२९०॥
राहौ नैर्ऋत्य[2]कोणे च शनौ पश्चिमदिग्स्थितम् ।
चन्द्रे वायौ[3] शनौ गर्ते निक्षारे राहुसंस्थिते ॥२९१॥
उच्चकेन्द्रस्थखेटेषु बलयुक्तेषु सर्वतः ।
लक्षसंख्यो निधिः सत्यं चन्द्रदृष्टौ स्वहस्तगः ॥२९२॥

---

लग्न से सप्तम तक की राशियां आभ्यन्तरिक कहलाती हैं । सप्तम से प्रथम तक बाह्य राशि कही जाती हैं ॥२८७॥

निधीश और लग्नेश यदि मध्यराशि में हो तो घर के बीच किसी कोने आदि में द्रव्य मिलना चाहिये ॥२८८॥

लग्नेश और चतुर्थेश यदि बाह्य राशियों में रहें तो घर से बाहर आँगन आदियों में धन कहना चाहिये ॥२८९॥

केन्द्रस्थ ग्रहों से पूर्वादि दिशाओं का निर्णय करना । यदि बुध केन्द्र में रहे तो धन घर की उत्तर दिशा में समझना ॥२९०॥

यदि गुरु केन्द्र में हो तो ईशान कोण में, रवि केन्द्र में हो तो पूर्वदिशा में, शुक्र केन्द्र में हो तो आग्नेय कोण में, मंगल केन्द्र में हो तो दक्षिण दिशा में निधि होती है ॥२९१॥

राहु केन्द्र में हो तो नैर्ऋत्य कोण, शनि केन्द्र में हो तो पश्चिम दिशा तथा किसी गर्त में, चन्द्र केन्द्र में हो तो वायव्य कोण में निधि होनी चाहिये ॥ २९२ ॥

---

1. वाच्याः for वाच्यं A. 2. ०त० for ०त्य० A. 3. The text reads वायव्ये which does not fit in with the metre.

उदयालंकृते खेटे शुभग्रहविलोकिते[1] ।
अकस्मान्निधिरायाति पुण्याढ्यस्य महात्मनः ॥२९३॥
यावन्त्योऽप्यंशका भुक्तास्तावन्त्याधारभाजने ।
छादितं[2] कलसादौ[3] तु द्रव्यं वाच्यं गृहे गृहे ॥२९४॥
धातुभाण्डे चरे ज्ञेयं मूलभाण्डं स्थिरे पुनः ।
द्विस्वभावेषु[4] मृद्भाण्डं चैवं[5] भाण्डस्य [6]निर्णयः ॥२९५॥
लग्नस्थमेषमाश्रित्य वृषयुग्मादिदक्षिणे ।
गृहस्यांशस्थिते भावे विज्ञेयो निधिदायकः ॥२९६॥
मीनकुम्भाद्युत्तरांशः सम्मुखस्थे च दक्षिणः ।
विन्यस्तचक्रमानेन देशो वाच्यो निधिस्थम् ॥२९७॥
लग्नमूर्तेर्गृहस्यैव हिबुकं दक्षिणे भवेत् ।
उत्तरे दशमस्थानं प्रविविक्षोर्विपर्ययः ॥२९८॥

सभी ग्रह यदि उच्च वा केन्द्र के हों और सबल रहे, साथ ही चन्द्र की दृष्टि रहे, तो लक्ष संख्या में निधि मिले ॥ २९२ ॥

शुभग्रह यदि लग्न में हों और अन्य शुभ ग्रहों से देखे जांय तो पुण्य-शील पुरुष को एकाएक निधि प्राप्त होती है ॥ २९३ ॥

जितने अंश को वे भोग कर गये हों उतने आधारपात्र वा कलश आदि में ढका हुआ द्रव्य घर में स्थित कहना चाहिये ॥ २९४ ॥

यदि चर राशि का लग्न हो तो धातु भाण्ड में, स्थिर राशि को हो तो मूल भाण्ड में, द्विस्वभाव का लग्न हो तो मट्टी के बर्तन में निधि का होना कहना चाहिये । इस प्रकार भाण्डों का निर्णय समझना ॥ २९५ ॥

लग्न का मेष समझ कर वृषादि दक्षिण क्रम से गृही का जिस अंश में निधि भाव पड़े उसी भाग में निधि कहना चाहिये ॥ २९६ ॥

मीन कुम्भादि क्रम से उत्तरादि दिशाओं में स्थापना करें और उत्तर का सम्मुख दक्षिण समझना चाहिये । इस प्रकार चक्र को स्थापित कर के निधि का स्थान बतलाना चाहिये ॥ २९७ ॥

—लग्नस्थान से घर में, चतुर्थ स्थान से दक्षिण दिशा में, और दशम स्थान से उत्तर दिशा में और यदि कोई ग्रह अन्य स्थान में जाने वाले हों तो विपरीत दिशा समझनी चाहिये ॥ २९८ ॥

1. बलोत्कटे for विलोकिते A. 2. स्थापितं for छादितं A. 3. कलशादौ for कलसादौ A.4. तु for षु A. 5. त्वेवं for चैवं A

क्रियते केवलादर्शो निधिसिद्धिप्रकाशकृत् ।
श्रीमद्देवेन्द्रशिष्येण श्रीहेमप्रभसूरिणा ॥२९९॥

इति चतुर्थभावे [1]शेवधिप्रकरणं सम्पूर्णम् ।

---

ज्ञानचारित्रसद्बीजं सिद्धिद्वारेऽपि गच्छताम्[2] ।
गणेशलब्धिविस्तीर्णं पक्वान्नभोजनं[3] ब्रुवे ॥३००॥
लग्ने तुर्येऽथवा[4] लाभे सौम्यखेचरसम्भवे ।
भोज्यं भवति पृच्छायां षट्रसास्वादसुन्दरम् ॥३०१॥
गुरौ लग्नेऽथवा शुक्रे पृच्छालग्ने गते[5] सति ।
अवश्यं लभ्यते भोज्यमटव्यामटताऽपि हि[6] ॥३०२॥
शनौ राहौ च लग्नस्थे रविदृष्टेऽथवा युते ।
न लभ्यते निजे गेहे शस्त्रघातो भवेत्स्फुटम्[7] ॥३०३॥

---

निधि को बतलाने वाला और केवल आदर्शमय ग्रन्थ देवेन्द्र के शिष्य श्रीहेमप्रभसूरि ने बनाया है ॥ २६६ ॥

सिद्धिद्वार में जाने वाले पुरुष के ज्ञान और चारित्र का सद्बीज रूप पकान्नभोजन के विषय में श्रीगणेश के प्रासाद से विस्तीर्ण कहता हूँ ॥ ३०० ॥

बुध अथवा कोई अन्य शुभ ग्रह लग्न चतुर्थ अथवा लाभस्थान में हो तो प्रश्नकाल में भोजन छः रसों के आस्वाद से सुन्दर होता है ॥३०१॥

प्रश्नकाल के लग्न में गुरु वा शुक्र हों तो जंगल में भी घूमने वाले मनुष्य को अवश्य भोजन मिले ॥ ३०२ ॥

शनि, राहु यदि लग्न में हों और सूर्य की दृष्टि पड़े अथवा एक स्थान में हों तो अपने घर में रहने पर भी भोजन नहीं मिलता और किसी शस्त्र आदि से चोट होती है ॥ ३०३ ॥

---

1. निधि for शेवधि A. A[1] 2. गच्छतः for गच्छताम् A, A[1] 3. सज्ञानं for पकान्न A. 4. तथा for ऽथवा A, 5 मते for गते A[1] 6. ०मरण्यमभ्यगैरपि for मटव्यामटताऽपि हि A, A[1] 7. ध्रुवम् for स्फुटम् A.

पृच्छायां तुर्यगे चन्द्रे भोजनं लवणाधिकम् ।
व्यञ्जनैर्वेषवाराद्यैर्[1] लवणेन घनेन वा ॥३०४॥
तूर्ये भौमे भवेद्भोज्यं मुहुः[2] कटु रसाश्रयम् ।
दशमे मङ्गले मांसं रक्तस्रावेण[3] संयुतम् ॥३०५॥
रवौ तूर्ये निष्प्रतापं सरसं तत्र शीतगौ ।
सकलहं ससंतापं भौमे तुर्येऽशनं स्मृतम् ॥३०६॥
बुधे भोज्यं कषायं तु गुरौ तु मधुरोज्ज्वलम् ।
सिताखण्डघृताढ्यं[4] तु भक्तं सूपहविर्युतम् ॥३०७॥
बुधे तत्र बुधानां च कथालापकपेशलम् ।
शनौ राहौ च तुर्यस्थे सशोकं सभयं पुनः ॥३०८॥

प्रश्नकाल में यदि चतुर्थ स्थान में चन्द्र रहे तो भोजन में अधिक नमक होगा और साग आदि अन्य पदार्थ भी अधिक नमक से विकृत होंगे ॥ ३०४ ॥

चतुर्थ स्थान में यदि मंगल रहे तो भोजन कड़वे रस से युक्त हो। दशम स्थान में यदि मंगल रहे तो रक्त से पूर्ण मांसभोजन की प्राप्ति हो ॥ ३०५ ॥

सूर्य चतुर्थ स्थान में रहे तो भोजन नीरस, चन्द्र रहे तो सरस मिले। मंगल चतुर्थ स्थान में रहे तो कलह तथा सन्ताप आदि से भोजन की प्राप्ति हो ॥ ३०६ ॥

बुध चतुर्थ स्थान में रहे तो भोजन कषायरसपूर्ण, गुरु चतुर्थ स्थान में रहे तो मधुर तथा शक्कर घृत आदि से युक्त दाल भात मिलना चाहिये ॥ ३०७ ॥

बुध चतुर्थ स्थान में हो तो पण्डितों के सद्वचनामृतों के साथ भोजन मिलना चाहिये। शनि और राहु यदि चतुर्थ स्थान में रहें तो शोक और भय के साथ भोजन प्राप्त हो ॥ ३०८ ॥

1. वराद्यै for वाराद्यै A. 2. ज्यमुष्णं for ०ज्यं मुहुः A. 3. श्रावेण for स्रावेण A. 4 सितः खंडघृताढ्यं for सिताखण्ड-घृताढ्यं A.

अम्लरसं सिते स्निग्धं पेयः स्वाद्यरसाश्रयम् ।
आकर्णान्तसुविश्रान्तनेत्राभिः परिवेषितम् ॥३०९॥
नीचे शुक्रे कदन्नं तु पक्वापक्वं जलाविलम् ।
अप्रतिपचिनिःस्नेहं दासीभिः परिवेषितम् ॥३१०॥
क्षिप्रादिविरसं रूक्षं पल्लचणककोद्रवम्[1] ।
सतैलं चाप्यतैलं वा शनौ भोज्यं भवेदिदम् ॥३११॥
उच्चे रवौ भवेदुष्णं तिक्तं च राजवेश्मनि ।
नीचे नीचान्तरैर्वाच्यं भोजनं [2]पृच्छवेश्मनि ॥३१२॥
सकृद्भोज्यं चरे लग्ने द्विर्वारं च स्थिरात्मकम् ।
भोजनत्रितयं प्रोक्तं द्विस्वभावे विधौ निधौ ॥३१३॥
शुक्रे चन्द्रे गुरौ तुर्ये पृच्छालग्ने सगौरवम् ।
शालिभोज्यं हविःस्पृष्टं[3] रम्यस्त्रीपरिवेषितम् ॥३१४॥

---

शुक्र चतुर्थ स्थान में हो तो खट्टा रस और कोमल सुस्वादु जल विशाल नेत्र वाली स्त्रियों से दिया हुआ मिले ॥ ३०९ ॥

शुक्र यदि नीच स्थान में हो तो कच्चा पका अन्न, मलिन जल से युक्त और वह भी अनादर के साथ दासियों से परोसा हुआ प्राप्त हो ॥ ३१० ॥

शनि चतुर्थ स्थान में यदि हो तो रूखा, विरस चना, तेल से युक्त अथवा अयुक्त भोज्यरूप में मिलना चाहिये ॥ ३११ ॥

रवि यदि उच्च का हो भोजन गर्म और तिक्त राजाओं के घर में मिले। वही यदि नीच घर का हो तो नीच जनों के घर में कहना चाहिये ॥ ३१२ ॥

चर लग्न रहे तो एक बार भोजन मिले, स्थिर लग्न रहने से दो बार, द्विस्वभाव लग्न हो और चतुर्थ चन्द्रमा रहे तो तीन बार भोजन मिले ॥ ३१३ ॥

शुक्र, चन्द्र वा गुरु लग्न में हों व चतुर्थ स्थान में हों तो भोजन सम्मानपूर्वक, घृत से मिश्रित और सुन्दर स्त्री से परोसा हुआ मिले ॥ ३१४ ॥

---

1. रूक्षवल्लवणाककोद्रवम् for रूक्षं पल्ल चणाककोद्रवम् A, A[1]. Bh. 2. दुःस्थ० for पृच्छ० Bh. 3. दुष्टं for स्पृष्टं A., Bh.

शुक्रे गुरौ निधिस्थाने बुधे चन्द्रे च लाभगे ।
शालिभोज्यं समं वस्त्रैर्लभ्यते पुण्यवेश्मनि ॥३१५॥
उच्चगेहे निधिस्थाने बुधे गुरौ बलोत्कटे ।
स्युः स्वर्णवस्त्रभोज्यानि चन्द्रे शुक्रे च लाभगे ॥३१६॥
गुरौ तुर्ये समंगल्यं धृतोत्साहं सितेऽपि च ।
वर्द्धापनविवाहादौ स्नेहभोज्यं सगीतकम् ॥३१७॥
लग्ने पुष्टे स्वके गेहे धने पुष्टे धनाद्भवेत् ।
तृतीये निजभगिनीभ्यः[1] पितृभ्यस्तुर्यवेश्मनि ॥३१८॥
पञ्चमे पुत्रपौत्रेभ्यः षष्ठे च शत्रुवेश्मनि ।
सप्तमे निजपत्नीभ्यः स्नेहातिशयभोजनम् ॥३१९॥
नवमे च प्रपासत्रे[2] दशमे भूपवेश्मनि ।
लाभेऽप्यश्वगजादीनां[3] लाभेन सहितं बहु ॥३२०॥

शुक्र, और गुरु निधिस्थान में हों, बुध और चन्द्र लाभस्थान में हों तो वस्त्रों के साथ चावलों का भोजन किसी पुण्यवान के घर में मिले ॥ ३१५ ॥

निधिस्थान में उच्च का सबल गुरु और बुध रहें, चन्द्र और ग्यारहवें स्थान में हों तो सुवर्ण, वस्त्र और भोजन सभी मिलें ॥ ३१६॥

चतुर्थ स्थान में गुरु वा शुक्र रहे तो बधाई, विवाह आदि कार्यों में मंगलाचार उत्साह और गीत के साथ घृतादियुक्त भोजन प्राप्त होता है ॥ ३१७ ॥

लग्नस्थान यदि पुष्ट रहें तो अपने घर में, धनस्थान के पुष्ट रहने से धन से, तृतीय स्थान के पुष्ट रहने से अपनी बहिनों से, चतुर्थ स्थान के पुष्ट रहने से पिता के घर से भोजन मिले ॥ ३१८ ॥

पञ्चम स्थान पुष्ट रहने से पुत्र पौत्रादि से, षष्ठ स्थान के रहने से शत्रु से, सप्तम के पुष्ट रहने पर स्त्री से स्नेहपूर्वक भोजन मिले ॥ ३१९॥

नवम स्थान के पुष्ट रहने पर किसी सराय की दुकान पर, दशम स्थान की पुष्टि में किसी राजा के घर में और एकादश यदि पुष्ट रहे तो घोड़ा, हाथी के साथ सुन्दर भोजन मिले ॥ ३२० ॥

1. भगनीभ्यः for भगिनीभ्यः A. 2. मत्र for सत्रे A. 3. ०गजानां तु for ०गजादीनां A.

तृतीयैकादशे दृष्टा[1] पत्नीनां स्नेहभोजनम् ।
चतुर्थाष्टमदृष्टया तु[2] स्वजनानां गृहे लभेत् ॥३२१॥
नवपञ्चमदृष्टयापि स्नेहेन भोजनं जनात् ।
सप्तमौभयदृष्टया तु वैरेण सहितं जयेत् ॥३२२॥
सौम्येषु तुर्यसंस्थेषु तुंगगेहे वने मतम्[3] ।
क्रूरेषु तत्र संस्थेषु भग्नवेश्मनि भोजनम् ॥३२३॥
तुर्ये गेहाङ्कमानेन भोज्यमानं ग्रहैः[4] स्मृतम् ।
लग्नतुर्यांकमानेन कव्वोलक[5]मितिर्मता ॥३२४॥
लग्नचक्रं महास्थानं[6] हृदि[7] ध्यात्वातिवर्तुलम् ।
तत्र ग्रहैर्दिशो वाच्या[8] व्यञ्जनानां यथाक्रमम् ॥३२५॥

लग्नेश और चतुर्थेश को परस्पर तृतीय एकादश दृष्टि हो तो स्त्री का प्रेम पूर्वक दिया हुआ भोजन मिलता है। और दोनों को चतुर्थ अष्टम, दृष्टि परस्पर रहे तो अपने लोगों के घर में भोजन मिलता है ॥३२१॥

दोनों को नवम और पञ्चम की यदि दृष्टि रहे तो स्नेहपूर्वक भोजन मिले। और दोनों को परस्पर सप्तम की दृष्टि होने से शत्रुता होने पर भी विजय कहनी चाहिये ॥ ३२२ ॥

शुभग्रह यदि चतुर्थ स्थान में हों तो उच्च गृह में वा वन में भोजन मिलता है। यदि पापग्रह उस में रहें तो टूटे फूटे घर में भोजन मिले ॥३२३॥

चतुर्थ वा लग्न स्थान से ग्रहों के द्वारा भोजन का विचार किया गया है। लग्न और चतुर्थ ही स्थान से व्यञ्जनादि का भी विचार करना चाहिये ॥ ३२४ ॥

गोलाकार, विशालस्वरूप लग्नचक्र को हृदय में ध्यान करके ग्रहों के द्वारा व्यञ्जनों ( शाकादियों ) की दिशाओं का निश्चय करना चाहिये ॥ ३२५ ॥

1. दृष्टया for दृष्ट्वा A. 2. The text reads च for तु A. 3. तुंगगेहेशनं० A, A¹० दनं for वने Bh 4. गृहैः for ग्रहैः Bh. 5. कव्वोलक० for कव्वोलक Bh. 6 स्थालं for स्थानं 7. The text reads हृदि A, A¹. 8. वाच्यं for वाच्या A¹.

तिक्तं रवौ विधौ क्षारं कटु भौमे मतं दिशि ।
बुधे कषायसंयुक्तं गुरौ तु मधुरोज्ज्वलम् ॥३२६॥
सितेऽम्लं[1] व्यञ्जनं वाच्यं शनौ राहौ च दग्धकः[2] ।
शुक्रस्य बालवृद्धौ च घृताधिक्यं तदा मतम् ॥३२७॥
क्रियते केवलादर्शो भुक्तिसिद्धिप्रकाशकृत् ।
श्रीमद्देवेन्द्रशिष्येण श्रीहेमप्रभसूरिणा ॥३२८॥

इति चतुर्थभावे भोजनप्रकरणम् ।

## अथ ग्रामपृच्छा[3]

ग्रामपृच्छासु सर्वेषु कंटकेषु शुभा ग्रहाः ।
तत्र पुर्यो महावप्रः[4] चतुर्दिक्ष भवेद्दृढः ॥३२९॥
केन्द्रेषु यदि सर्वेष्वप्युच्चा दृष्टाः शुभा ग्रहाः ।
तत्र पुर्यां महावप्रः सर्वोच्चैर्निश्चितं[5] मतः ॥३३०॥

रवि चतुर्थ स्थान में रहे तो भोजन तिक्त, चन्द्रमा चतुर्थ स्थान में हो तो नमकीन, मंगल रहे तो कडुवा, बुध रहे तो कषाय रस वाला, गुरु रहे तो मधुर और उज्ज्वल रहता है ॥ ३२६ ॥

शुक्र चतुर्थ स्थान में रहे तो अम्ल रस वाला शाक कहना चाहिये । शनि और राहु रहें तो जला हुआ, शुक्र की बाल्यावस्था तथा वृद्धावस्था रहने पर व्यञ्जन घृतपूर्ण होता है ॥ ३२७ ॥

श्रीदेवेन्द्रसूरि के शिष्य श्रीहेमप्रभसूरि ने भोगसिद्धि के प्रकाशक एकमात्र आदर्शरूप इस ग्रन्थ की रचना की ॥ ३२८ ॥

ग्राम के संबंध में पूछने पर यदि प्रश्नकाल सभी में शुभ ग्रह केन्द्र स्थानों में रहें तो उस नगरी के चारों ओर पहाड़ी प्रदेश कहना चाहिये । ३२९ ॥

यदि केन्द्रस्थान में उच्च के शुभ ग्रह रहें तो उस नगरी में एक विशाल उच्च वप्र कहना चाहिये ॥ ३३० ॥

1. ०स्तं for ०म्लं A[1]. 2. दग्धकम् for दग्धकः A. 3. The portion अथ ग्रामपृच्छा is found only in A[1]. 4. तत्र ग्रामे स्फुटं वप्रः for तत्र पुर्यां महावप्रः A[1] 5. चो नि० for ०च्चैर्नि० A.

तृतीयतुर्ययोर्लग्नात्पञ्चमे च शुभा ग्रहाः ।
तत्र वप्रो गुरुर्वाच्यः स्वोच्चस्थः पुनरुच्चकैः ॥३३१॥
शुक्लेन्दू[1] कंटके यत्र पानीयं तत्र निश्चितम् ।
शुक्रेन्दू सकुजौ यत्र तत्रोद्यानं जलाश्रयम् ॥३३२॥
द्वन्द्वे हैर्भ वेद्वृत्तं त्र्यस्रैस्त्र्यस्रो गढो मतः ।
चतुरस्रैश्चतुष्कोणे पुरे वप्रो[2] भवेत्पुनः ॥३३३॥
लग्नं सौम्यग्रहैर्दृष्टं समृद्धं पुरमुच्यते ।
अथ क्रूरग्रहैर्दृष्टं दुःस्थं भवति पत्तनम् ॥३३४॥
यत्र गुरुर्भवेत्तत्र रम्यं देवगृहैः पुरम् ।
शुक्रेन्दू यत्र कोणे तु तत्र कूपादिके जलम् ॥३३५॥
यत्र भौमो द्रुमस्तत्र स्याद्बुधे वेष्टकागणः[3] ।
यत्र राहुशनी कोणे तत्र गर्ताः सपुञ्जकाः ॥३३६॥

लग्न से तीसरे, चौथे, पांचवें स्थान में यदि शुभ ग्रह हों तो एक वप्र उस गांव में अवश्य कहें, यदि वे उच्च के हों तो विशाल वप्र कहें ॥३३१॥

केन्द्रस्थान में यदि शुक्र और चन्द्रमा रहें तो वहां जल अवश्य रहे और जहां पर शुक्र चन्द्र मंगल के साथ हों तो जलाश्रित एक बाग भी कहना चाहिये ॥ ३३२ ॥

केन्द्रस्थान में यदि दो ग्रह एक साथ पड़े हों तो नगर में दो गर्त, तीन ग्रहों से तीन गर्त और चार ग्रहों से चारों कोनों में वप्र कहना चाहिये ॥ ३३३ ॥

लग्न यदि शुभ ग्रहों से देखा जाय तो वह नगर समृद्धिशाली कहना चाहिये । पापग्रहों की दृष्टि रहने पर दुरवस्था को प्राप्त कहना चाहिये ॥ ३३४ ॥

लग्न को देखने वाला यदि गुरु हो तो मन्दिरों से युक्त नगर कहना चाहिये । शुक्र और चन्द्र जिस कोण में रहें उस कोण में कूप आदि जल कहना चाहिये ॥ ३३५ ॥

मंगल चक्र में जिस दिशा में हो उस दिशा में वृक्ष कहना चाहिये । और बुध जिधर हो उस तरफ ईटों का पुञ्ज कहना चाहिये और राहु शनि जहां पर हों उस कोने में गढ्ढे होंगे ॥ ३३६ ॥

1. शुक्रेन्दु Bh. 2. The text reads वाप्र for वप्रो which is incorrect. 3. The text reads निष्टका for वेष्टका ।

भवेत्तत्रेष्टिकापाकः पुष्टो यत्र रविर्भवेत् ।

यत्र सौम्यग्रहश्रेणि[1]र्हट्टाली[2] तत्र कोणके ॥३३७॥

लग्नस्य तुर्यके ग्रामो रक्ष्यते च शुभैर्ग्रहैः[3] ।

तृतीये तुर्यधीसंस्थैरि[4]ति ग्रामोऽतिवप्रकः ॥३३८॥

यत्र कोणे शुभाः खेटा एकराशिगताः[5] पुनः ।

पुरस्य तत्र कोणे स्यात्सौवर्णी कलशावलिः ॥३३९॥

यावन्तोऽप्यंशका भुक्ता लग्नस्याभ्युदितस्य[6] ते ।

तावद् हस्तप्रमाणोऽयं वप्रो भवति निश्चितम् ॥३४०॥

यत्र वित्ते च धीभागे शुक्रो भवेद्बलाधिकः ।

तत्र ग्रामे[7] पुरे वापि निधिर्भवति निश्चितम् ॥३४१॥

जहां पर पुष्ट रवि हो उस दिशा में पका हुआ ईटा कहना चाहिये । और जिस कोने में पुष्ट शुभ ग्रह होवें उस कोने में सुन्दर पक्के मकान होने चाहिये ॥ ३३७ ॥

लग्न के चौथे स्थान में यदि शुभ ग्रह हों तो गांव सुरक्षित रहें । तीसरे, चौथे, पांचवें में रहें तो गांव में अधिक वप्रस्थान कहने चाहिये ॥ ३३८ ॥

जिस कोने में शुभ ग्रह एक राशिस्थ होकर रहें उस गांव के उस कोने में सुवर्ण के कलश होवें ॥ ३३९ ॥

प्रश्नलग्न के जितने अंश बीत चुके हों उतने हाथ का वप्र निश्चय ही कहना चाहिये ॥ ३४० ॥

जिसमें धनस्थान और धर्मस्थान में बली होकर शुक्र रहे उस ग्राम अथवा नगर में निश्चय ही धन होता है ॥ ३४१ ॥

1. श्रेणि for श्रेणी A¹. 2. हट्टश्री for हट्टाली A, A¹. 3. शुभग्रहैः for शुभैर्ग्रहैः A, A¹. 4. The text reads ग्रामे A¹. 5. the text reads गता: for गता: । The portion beginning with मे and ending with करोत्यहो ( P. 72) is missing in Bh. 6. लग्नस्या for लग्नस्या A. 7. The text reads ग्रामे for ग्रामे

क्रियते केवलादर्शः[1] परसिद्धि काव्यकृत् ।
श्रीमद्देवेन्द्रशिष्येण श्रीहेमप्रभसूरिणा ॥३४२॥

इति चतुर्थभावे तृतीयं ग्रामप्रकरणम् ।

## अथ पुत्रप्रकरणम्

पुत्रो वा पुत्रिका वापि पत्नी गर्भे भविष्यति ।
इति प्रश्नेषु विज्ञेयौ[2] पञ्चमेशविलग्नपौ ॥३४३॥
लग्नेशपंचमेशौ चेत् नरराशिव्यवस्थितौ ।
तदा पुत्रः समादेश्यः स्त्रीराशौ स्त्रीपदौ[3] च तौ ॥३४४॥
अयुग्लग्नस्थिते मन्दे पुत्रजन्म मतं सताम्[4] ।
समलग्ने समांशे वा पुत्रीजन्म स्फुटं भवेत् ॥३४५॥
एतस्याः प्रसवः कस्मिन् काले किल भविष्यति ।
लग्नांशकास्तु यावन्तः पृच्छाकाले तदोदिताः ॥३४६॥
गर्भोत्पन्नशिशोर्वाच्या[5] मासस्तावन्त एव हि ।
अभुक्तास्तेऽत्र ये वांशास्तावन्त एव शेषकाः ॥३४७॥

---

श्रीदेवेन्द्रशिष्य श्रीहेमप्रभसूरि ने नगरसिद्धि पर प्रकाश डालने वाले एकमात्र आदर्शरूप इस ग्रन्थ की रचना की ॥ ३४२ ॥

गर्भ में पुत्र होगा वा कन्या होगी इस प्रश्न में पञ्चमेश और लग्नेश को जानना चाहिये ॥ ३४३ ॥

लग्नेश वा पञ्चमेश यदि नर राशि में रहें तो बालक, स्त्री राशि में रहें तो कन्या कहनी चाहिये ॥ ३४४ ॥

विषमराशि लग्न हो और उस में शनि पड़ा हो तो पुत्र जन्म और समराशि लग्न हो तथा समनवांशक हो तो कन्या जन्म कहना चाहिये ॥ ३४५ ॥

इस स्त्री को प्रसव कब होगा ऐसे प्रश्न में प्रश्नकाल में लग्न के जितने अंश उदित हुए हों उतने गर्भ के गत मास कहने चाहियें ॥३४६॥

और जितने अंश भुक्त न हों अर्थात् शेष बचे हों उतने ही मास प्रसवोत्पत्ति के कहने चाहिये ॥ ३४७ ॥

---

1. The text reads लोकः for दर्शः 2. प्रश्ने बुधैर्ज्ञेयौ for प्रश्नेषु विज्ञेयौ A, A[1] 3. पदौ for पदौ A. 4. सतां मतम् for मतं सताम् A. 5. The text reads गर्भेत्यत्र शिशौ वाच्या for गर्भोत्पन्नशिशोर्वाच्या A.

लग्नेशो लग्नसंयुक्तो नरराशौ रविर्भवेत् ।

तदा बुधैः पुमान् वाच्यो व्यत्यये व्यत्ययः पुनः[1] ॥३४८॥

जीविष्यति ममापत्यमिति प्रश्ने समागते ।

शुभेक्षितस्तु रिष्फेशः केन्द्रगतोऽथवा पुनः[2] ॥३४९॥

जीवत्येवं तदापत्यं ताजिके शास्त्रसंमते ।

चन्द्रे तत्र शुभैर्युक्ते विशेषण च जीवति ॥३५०॥

दिनराश्युदये लग्ने[3] लग्नस्वामी दिनग्रहः ।

यदि जातस्तदा वाच्यं दिवा जन्म विचक्षणैः ॥३५१॥

दिनलग्नेषु लग्नं चेल्लग्नशो दिनराशिषु ।

दिवाजन्म तदा वाच्यं व्यत्यये व्यत्ययः पुनः ॥३५२॥

अस्मिन् वर्षे विजातं मे भविष्यति न वा पुनः[4] ।

लग्नेशः पञ्चमे स्थाने सुतेशो वाथ[5] लग्नगः ॥३५३॥

लग्नेश लग्न में हो, सूर्य नर राशि में रहे तो पुरुष की उत्पत्ति कहनी चाहिये । इसके विपरीत कन्या की उत्पत्ति कहनी चाहिये ॥ ३४८ ॥

यह मेरी सन्तान जीवित रहेगी वा नहीं, ऐसे प्रश्न में रिष्फेश यदि शुभ ग्रह से देखा जाय वा केन्द्रस्थ होवे तो सन्तान अवश्य ही चिरजीवित रहेगी ॥ ३४६ ॥

केन्द्र में चन्द्रमा यदि शुभग्रहों से युक्त हो तो सन्तान चिरजीवित रहेगी यह ताजिक शास्त्र के अनुसार कहा है ॥ ३५० ॥

दिनराशि यदि लग्न हो, लग्न के स्वामी यदि दिन ग्रह रहें तो दिन में सन्तान की उत्पत्ति कहनी चाहिये ॥ ३५१ ॥

लग्न यदि दिन लग्नों में से हो, लग्नेश यदि दिन राशि में रहे तो दिन में ही जन्म कहना चाहिये । इसके विपरीत में कन्या होती है ॥३५२॥

इस वर्ष में मुझे पुत्र होगा वा नहीं, ऐसे प्रश्न में लग्नेश यदि पञ्चम स्थान में वा पञ्चमेश लग्न स्थान में रहें तो ॥ ३५३ ॥

1. पुमान् for पुनः Amb 2. भवेत् for पुनः A. लग्ने for लग्ने A.
4. भवेत् for पुनः Amb 5. वापि for वाथ A.

इति योगे[1] बुधैर्वाच्ये[2] तत्र वर्षे तनूद्भवः[3] ।
अन्ये योगा बुधैर्वाच्यास्तद्वर्षे[4] पुत्रदायकाः ॥३५४॥
चन्द्रशुक्रौ यदा गर्भे लाभे वाऽथ स्थितौ यदि ।
पुण्यवतां तदा वाच्यमपत्यजन्म निश्चितम् ॥३५५॥
लाभपञ्चमसंस्थौ चेत्प्रपश्येतः परस्परम् ।
चन्द्रशुक्रौ तदापत्यं जायते नात्र संशयः ॥३५६॥
यदेन्दुः भौमशुक्राभ्यां गर्भो वा वीक्षितः शुभैः ।
तदासौ जायते पुत्रो नात्र कार्या विचारणा ॥३५७॥
मूर्तेस्तु यत्तमे स्थाने बलाढ्यो[5] भृगुनन्दनः ।
गर्भिण्या जातगर्भस्य मासानाख्याति तावतः ॥३५८॥
चन्द्रदृष्टेऽधर्मयुक्ते क्रूरदृष्टे च पञ्चमे ।
नीचस्थेऽस्तमिते गर्भे नैवापत्यं प्रजायते ॥३५९॥

---

उस वर्ष में पुत्रोत्पत्ति कहनी चाहिये । इसी प्रकार अन्य योग भी पुत्रदायक होते हैं ॥ ३५४ ॥

चन्द्रमा और शुक्र गर्भस्थान वा लाभस्थान में रहें तो पुण्यवान व्यक्तियों को अवश्य सन्तान होवे ॥ ३५५ ॥

वे ही यदि ग्यारहवें तथा पांचवें स्थान में रहें तथा पारस्परिक दृष्टि हो तो अवश्य सन्तानोत्पत्ति कहनी चाहिये ॥ ३५६ ॥

यदि चन्द्रमा गर्भस्थान में हो, मंगल और शुक्र से देखा जाय वा अन्य शुभ ग्रहों से देखा जाय तो पुत्र अवश्य उत्पन्न होगा । इस में सन्देह नहीं ॥ ३५७ ॥

लग्न से जितने स्थान में सबल शुक्र रहे उतने मासों में गर्भवती स्त्री का प्रसव कहना चाहिये ॥ ३५८ ॥

चन्द्रमा यदि पञ्चम स्थान को देखे और वह पापग्रहों से युक्त तथा दृष्ट हो और वह नीच तथा अस्त गृह में पड़ा हो तो सन्तान नहीं होती ॥ ३५९ ॥

---

1. योगो for योगे A. 2. वाच्यो for वाच्ये A. 3. The text reads तद्भवः for तनूद्भवः 4. प्रेक्षाः for वाच्या० A. 5. The text reads बलाख्या for बलाढ्यो A.

पञ्चमाधिपतिर्लग्ने सुते लग्नेशचन्द्रमाः ।
तदा पुत्रः समादेश्यः पृच्छकस्य बुधैः किल[1] ॥३६०॥
चन्द्रयुक्तेक्षिते गर्भे[2] सौम्ययुक्तेक्षितेऽपि च ।
उच्चस्थेऽभ्युदिते तत्र पुण्यापत्यं प्रजायते ॥३६१॥
लग्ने शुभग्रहैर्जाते शुभस्थाने[3] शुभे ग्रहे[4] ।
आये सुतेऽथवा राज्ये पुष्टे गुरौ सुतं वदेत् ॥३६२॥
सौम्याश्चेत् पंचमे स्थाने बलवांस्तनयो भवेत् ।
क्रूरैर्विजीयमानोऽपि म्रियते नात्र संशयः ॥३६३॥
एकं वा द्वेऽथवाऽपत्ये भविष्यतोत्र[5] संशये ।
द्विस्वभावं विलग्नं चेत्तत्र गर्भे शुभा ग्रहाः ॥३६४॥
तदापत्यद्वयं वाच्यं शुद्धलग्ने बुधैः स्फुटम् ।
चरे बहूनि जायन्ते स्थिरे त्वेकं वरं मतम् ॥३६५॥

---

पञ्चमेश लग्न में रहे, लग्नेश और चन्द्रमा पञ्चमस्थान में रहे तो प्रश्न कर्ता को पुत्र अवश्य होवे ॥ ३६० ॥

गर्भस्थान चन्द्रमा से युक्त वा दृष्ट हो और शुभ ग्रह से युक्त, दृष्ट हो और वे उदित होकर उच्चस्थित होवें तो पुण्यवान सन्तान का जन्म कहना चाहिये ॥ ३६१ ॥

लग्नस्थान में शुभग्रह हों और शुभस्थानों शुभग्रह रहें ग्यारहवें, पांचवें वा नवम स्थान में पुष्ट गुरु हों तो अवश्य पुत्र कहना चाहिये ॥ ३६२ ॥

शुभग्रह यदि पंचम स्थान में रहें तो अवश्य बलिष्ठ पुत्र की उत्पत्ति हो । यदि वे ही पापग्रहों से जीते गये हों तो उसकी मृत्यु भी अवश्य होवे ॥ ३६३ ॥

एक वा दो पुत्र होंगे ऐसे प्रश्न में यदि द्विस्वभाववाले लग्न हों तो और शुभ ग्रह गर्भस्थान में हों ॥ ३६४ ॥

तो पुत्र द्वय कहना । चर राशि लग्न रहे तो बहुत से पुत्र होवें । स्थिर लग्न में एक पुत्र कहना चाहिये ॥ ३६५ ।

---

1. ध्रुवम् for किल A. 2. मन्दे for गर्भे A. 3. सुत for शुभ A 4. शुभग्रहौ *A*. 5. The text reads भविष्यतो for भविष्यत्य A, A[1].

चत्वारि खेटयुग्मानि चेद्भवन्ति यदैकदा ।
तदापत्यद्वयोत्पत्तिः पृच्छालग्ने सतां मता ॥३६६॥
तावत्संख्यान्यपत्यानि प्रश्ने वाच्यानि पण्डितः ।
सम्पूर्णदृष्टयो वापि यावत्संख्याः शुभा ग्रहाः ॥३६७॥
स्त्रीग्रहाणां तु संख्यातः पुत्रीसंख्याभिधीयते ।
पुरुषग्रहसंख्याने पुत्रसंख्या स्फुटा मता ॥३६८॥
पञ्चमाङ्कानुमानेन ग्रहदृष्टिवशेन वा[1] ।
पुत्रसंख्या ग्रहैर्वाच्या मृत्युसंख्याधमैर्ग्रहैः ॥३६९॥
सर्वग्रहेक्षिते ग र्भे तुंगकेन्द्रगतैर्ग्रहैः ।
नृपतुल्यो भवेत्पुत्रो ग्रहदृष्टिप्रभावतः ॥३७०॥
एकः पुत्रो रवौ धीस्थे चन्द्रे तत्र सुताद्वयम् ।
भौमे पुत्रास्त्रयो वाच्या बुधे पुत्रीचतुष्टयम् ॥३७१॥
गुरौ गर्भे सुताः पंच षट्पुत्राश्च सिते मताः ।
शनौ पुत्र्यो ध्रुवं सप्त तुंगे पुत्रा महर्द्धिकाः ॥३७२॥

---

प्रश्न लग्न में चार युग्म ग्रह यदि एकत्र रहें तो दो पुत्र कहने चाहियें ॥ ३६६ ॥

प्रश्नकुण्डली में पूर्ण दृष्टि वाले जितने शुभ ग्रह रहें उतनी सन्तान कहनी चाहिये ॥ ३६७ ॥

स्त्रीग्रहों की संख्या से कन्याओं की संख्या और पुरुषग्रहों की संख्या से पुरुषों की संख्या कहनी चाहिये ॥ ३६८ ॥

पञ्चम स्थान की स्थिति, ग्रह की दृष्टि, पुत्रसंख्या का ग्रह और पापग्रहों से मृत्युसंख्या के विचार से सन्तानों की संख्या और दीर्घायु, अल्पायु विचार कर फल कहना चाहिये ॥ ३६९ ॥

पञ्चम स्थान को यदि सभी उच्च और केन्द्र के ही ग्रह देखें तो उसग्रह दृष्टि के प्रभाव से राजतुल्य पुत्र की उत्पत्ति हो ॥ ३७० ॥

पञ्चम स्थान में यदि एक रवि रहे तो एक लड़का, सोम रहे तो दो लड़की, मंगल रहे तो तीन लड़का, बुध रहे तो चार लड़की होनी चाहिये ॥ ३७१ ॥

गुरु यदि पंचम स्थान में रहें तो पांच पुत्र होवें, शुक्र रहें तो ६ पुत्र, और शनि रहे तो सात लड़की, इस प्रकार यदि वे उच्च के हों तो समृद्धिशाली पुत्र होवें ॥ ३७२ ॥

---

1. प्रभावतः for वशेन वा A.

क्रिते यकेवलादर्शः शिशुजन्मप्रकाशकृत् ।
श्रीमद्देवेन्द्रशिष्येण श्रीहेमप्रभसूरिणा ॥३७३॥

इति पञ्चमभावे पुत्रप्रकरणम्

रोगप्रश्ने बुधैर्वाच्यं[1] सप्तमं रोगसंज्ञकम्[2] ।
यावन्तः खेचरा लग्नेऽथवा लग्नेशपार्श्वगाः ॥३७४॥
तावन्तः पुरुषा वाच्या रोगिणोऽपि समीपगाः ।
पुंग्रहैः पुरुषस्तत्र स्त्रीगृहे प्रमदाः पुनः ॥३७५॥
रोगस्थाने चर ऊर्ध्वं संचरन् गृहमध्यतः ।
उपविष्टः स्थिरे रोगी सुप्तो वाच्यो द्विदेहके[3] ॥३७६॥
चरेऽष्टमे परे[4] देशे स्थिरे तत्रैव संस्थितः ।
ग्रामद्वितयमध्यस्थो रोगी भवेद्[5] द्विदेहके ॥३७७॥

---

श्रीदेवेन्द्र के शिष्य श्रीहेमप्रभसूरि ने पुत्र जन्म पर प्रकाश डालने वाला इस एकमात्र आदर्श ग्रन्थ का निर्माण किया है ॥ ३७३ ॥

रोगप्रश्न में षष्ठ स्थान रोगसंज्ञक समझना । फिर लग्न वा लग्न के आस पास में जितने ग्रह होवें उतने पुरुष रोगी के पास होते हैं। वहां पुरुष ग्रह जितने रहें उतने पुरुष और स्त्रीग्रह जितने रहें उतनी स्त्रियां लगा रहती हैं ॥ ३७४-७५ ॥

रोगस्थान चर राशि हो तो रोगी को घर के ऊपर में चलता हुआ समझना चाहिये। यदि स्थिर राशि हो तो घर के मध्य में बैठा हुआ कहना चाहिये, द्विस्वभाव राशि में हो तो रोगी को सोता हुआ समझना चाहिये ॥ ३७६ ॥

लग्न से अष्टम स्थान यदि चर राशि का हो तो रोगी परदेश में रहे, यदि स्थिर राशि रहे तो वहीं रहे और यदि द्विस्वभाव वाले राशि रहें तो दो गांव के बीच में रोगी रहे ॥ ३७७ ॥

---

1. ज्ञेयं for वाच्यं A. 2. भोग for रोग A, A[1] 3. द्विदेहिके A. द्विदेहके A. 4. पर for परे A. 5. the text reads भवति for भवेत ।

रोगिणोऽस्य बुभुक्षा न विनष्टे त्वग्निखेचरे ।
रक्तग्रहे विनष्टे तु विनष्टं रुधिरं वदेत्[1] ॥३७८॥
छिद्रस्थौ चन्द्रशुक्रौ चेदतीसारं विनिर्दिशेत् ।
छिद्रस्थावुशना[2]भौमौ बलपाताय कीर्तितौ ॥३७९॥
भौमार्कौ रुधिरोद्रेकं पित्तोद्रेकं च संस्थितम् ।
सक्रूरो धिषणस्तत्र सन्निपातं करोति च ॥३८०॥
द्यूने कुजेऽथवा सूर्ये संतापं रोगिणां वदेत् ।
शनिरन्यग्रहैर्युक्तश्चि[3]त्तरोगं करोत्यहो ॥३८१॥
छिद्रस्थौ राहुमार्तण्डौ कुष्ठरोगप्रदायकौ ।
प्रददाति महाकुष्ठं ताभ्यां युक्तस्तु मङ्गलः ३८२॥
तत्र शनौ च राहौ च वातरोगः स्फुटं भवेत् ।
कम्पेते हस्तपादौ च रोगस्यैवं[4] विनिश्चयः ॥३८३॥

---

यदि अग्निग्रह विनष्ट रहें तो रोगी को भूख की कमी होती है। रक्तग्रह यदि नष्ट हों तो रुधिर की कमी कहनी चाहिये ॥ ३७८ ॥

यदि आठवें स्थान में चन्द्र और शुक्र रहें तो अतीसार कहना चाहिये। तो फिर शुक्र और शनि उस स्थान में रहें तो बल की कमी होती है ॥ ३७६ ॥

आठवें स्थान में यदि मंगल और रवि रहें तो रुधिर और पित्त का अतिशय कहना चाहिये। फिर शुक्र और शनि उस स्थान में रहें तो सन्निपातरोग होता है ॥ ३८० ॥

सप्तम स्थान में यदि मंगल वा रवि रहें तो रोगी को पूर्ण पीड़ा होती है। शनि किसी अन्य ग्रहों से युत होकर बैठा हो तो मानसिक रोग होता है ॥ ३८१ ॥

अष्टम स्थान में यदि सूर्य और राहु रहे तो कुष्ठ रोग होता है। यदि मंगल भी उनके साथ बैठा हो तो महाकुष्ठ कहना चाहिये ॥ ३८२ ॥

अष्टम स्थान में शनि वा राहु रहें तो वातरोग होता है। हाथ पांव सभी कांपने लगते हैं। रोग का इस प्रकार निश्चय जानना ॥३८३॥

---

4. The text reads भवेत् for वदेत् which is obviously incorrect. 2. वुशनो for वुशना A. 3. चित्र for चित्त A
1. The text reads दं for वं

अमुकमौषधं भव्यमिति प्रश्ने च लग्नतः ।
लग्नं वैद्यः सुखं रोगी व्याधिस्तत्र च सप्तमम् ॥३८४॥
औषधं दशमं प्रोक्तं[1] तच्च ज्ञेयं शुभाशुभम् ।
वैद्योषधी[2] बलाधिक्ये बलत्वे रोगरोगिणोः[3] ॥३८५॥
रोगी जीवति निर्विघ्नं विपरीते विपर्ययः ।
वैद्यस्य रोगिणोर्मैत्र्यं[4] मैत्र्यमोषधरोगिणोः ॥३८६॥
लग्नस्य सबलत्वे च केन्द्रे[5] सौम्यग्रहेषु च ।
उच्चस्थेऽपि त्रिकोणे च रोगी जीवति मानवः ॥३८७॥
अष्टमे च रवौ लग्ने[6] चन्द्रे तत्र जलाद् भवेत् ।
सन्निपातात्कुजे वाच्या बुधैः स्याज्ज्वरतो मृतिः ॥३८८॥
अजीर्णाद्धिषणात्प्रोक्ता तृषः शुक्रात्पुनर्मृतिः ।
बुभुक्षातः शनेर्वाच्या निश्चितं रोगिणः पुनः ॥३८९॥

---

यह औषध अच्छा होगा वा नहीं ऐसे प्रश्न में वैद्य को लग्न, रोगी को चतुर्थ और व्याधि को सप्तम और औषध को दशम स्थान समझ कर शुभाशुभ का निर्णय करना चाहिये। वैद्य, औषधस्थान यदि सबल होवें, रोग और रोगी के स्थान यदि निर्बल हों तो अवश्य रोगी जीवे अन्यथा उसकी मृत्यु हो। वैद्य और रोगी तथा औषध और रोगी की परस्पर मैत्री कही गयी है ॥ ३८४–३८६ ॥

लग्न सबल रहे और शुभ ग्रह केन्द्रस्थान में रहें वा उच्च में रहें वा नवम, पञ्चम में रहें तो रोगी अवश्य जीवित रहता है ॥३८७॥

अष्टम स्थान में रवि, लग्न में चन्द्र रहे तो जल से, मंगल लग्न में रहे तो सन्निपात से, बुध रहे तो ज्वर से मृत्यु होवे ॥३८८॥

अष्टम स्थान में गुरु रहे तो अजीर्ण से, शुक्र रहे तो प्यास से, शनि रहे तो भूख से रोगी को निश्चय ही मृत्यु कहनी चाहिये ॥३८९॥

---

1. दशममौषधप्रोक्तं for औषधं दशमं प्रोक्तम् A, A[1]
2. ०षध्यो for ०षधी 3. रोगिणाम् for रोगिणोः A. 4. ०मैत्र्यां for ०मैत्र्यं Bh. 5. The text reads केन्द्र for केन्द्रे 6 रवावम्ने for रवौ लग्ने A, A[1].

लग्नस्थाने बलाधिक्ये लाभस्यापि ग्रहादिभिः ।
रोगी जीवति पूर्णायुर्वीतरोगो भवेदयम् ॥३९०॥
चन्द्रो लग्नपतिर्वापि पृष्ठे[1] मृत्यौ खलेक्षितः ।
दीर्घरोगी नरो वाच्यो वक्रिते लग्ननायके ॥३९१॥
विनष्टे लग्नपे मृत्युः कंटके मृत्युनायके ।
गृध्रकोलोरगत्र्यंशै[2]रुदितैरपि पञ्चता[3] ॥३९२॥
चतुरस्रे यदा चन्द्रः पापग्रहद्वयान्तरे ।
लग्ने षष्ठोदये बन्धौ क्रूरविद्धौ मृतौ मृतिः ॥३९३॥
षष्ठे[3] लग्ने चरे केन्द्रे शुभयुक्ते तदोदिते ।
कृतान्तवक्त्रगो रोगी जीवत्येव सुवैद्यतः ॥३९४॥

इति षष्ठस्थाने रोगप्रकरणम् ।

अथ सर्वभावेभ्यो जायाप्रकरणं प्रधानं सप्तमभावे कथ्यते ।

---

लग्नस्थान और लाभस्थान में सबल ग्रह यदि हों तो रोगी पूर्णायु और रोगरहित होकर जीता है ॥३६०॥

लग्नेश वा चन्द्र षष्ठ वा अष्टम स्थान में रहें और पाप ग्रहों से देखे जांय,और लग्न नायक यदि वक्री हो तो मनुष्य चिरकाल तक रोगी रहे ॥३६१॥

लग्नेश यदि नष्ट हो, अष्टमेश यदि केन्द्र में हो तो त्र्यंशों के उदित रहने पर भी, गीध सूअर अथवा सांप द्वारा मृत्यु समझनी चाहिये ॥३६२॥

चन्द्रमा यदि चौथे वा आठवें स्थान में हो तथा दो पापग्रहों के बीच में हो, लग्न, छठा, चौथा और आठवां पापग्रहों से विद्ध हो तो मृत्यु हो जाती है ॥ ३६३ ॥

लग्न वा छठे गृहों में चर ग्रह हों, केन्द्रस्थान शुभ तथा उदित ग्रहों से युक्त हों तो यमराज के मुख में पड़ा हुआ भी रोगी सद्वैद्य के द्वारा बचा ही रहेगा ॥ ३६४ ॥

---

1. षष्ठे for पृष्ठे Bh. 2. For this line A reads. गृध्रगोलोरगस्त्र्यंशोरुदितौरपि पंचता ॥ ०कोलोरगत्र्यंशै Bh. 3. A, A[1] read पृष्ठे for षष्ठे

यदि लग्नपतिर्लग्ने भर्त्रादेशकरी प्रिया ।
लग्नेशः सप्तमे स्थाने जायादेशकरः पतिः[1] ॥३९५॥
यदा लग्नपतिर्लग्ने जायेशः सप्तमे[2] यदि ।
तदा प्रीतिर्द्वयोर्वाच्या समानैव परस्परम् ॥३९६॥
यदा भार्यापतिर्लग्ने लग्नेशः सप्तमे यदि ।
अन्योऽन्यप्रीतिपीयूषपूरपूरितसम्मदौ[3] ॥३९७॥
यदा लग्नेशजायेशौ लग्नेऽथ भवतो यदि ।
तदा गाढतरी[4] प्रीतिस्तोलिता द्वितयेऽपि च ॥३९८॥
यदा जायापतिर्लग्ने[5] जायास्थानस्थितो यदि ।
प्राधान्येनैव भार्यायाः समा प्रीतिर्द्वयोर्भवेत्[6] ॥३९९॥

## चतुर्भङ्ग्या प्रीतिः

जायास्थानं यदा तुंगे[7] प्रश्ने भवति लग्नतः ।
रूपलावण्यजन्माद्यैरुत्तमा भर्तृतोऽङ्गना ॥४००॥

---

लग्नेश यदि लग्न में रहे तो स्त्री भर्ता की आज्ञाकारिणी होती है। यदि लग्नेश सप्तम स्थान में रहे तो पति पत्नी का आज्ञाकारक होगा ॥ ३९५ ॥

लग्नेश यदि लग्न में, सप्तमेश सप्तम स्थान में रहे तो स्त्री और पुरुष दोनों में पारस्परिक प्रेम कहना चाहिये ॥ ३९६ ॥

यदि सप्तमेश लग्न में और लग्नेश सप्तम स्थान में हो तो भी स्त्री पुरुष पारस्परिक प्रेमामृत से युक्त सम्पदा वाले होवें ॥ ३९७ ॥

लग्नेश और सप्तमेश दोनों यदि लग्न में रहें तो दोनों में प्रगाढ प्रेम होता है ॥ ३९८ ॥

जब लग्नेश और सप्तमेश दोनों सप्तम स्थान रहें तो स्त्री की प्रधानता से दोनों में पारस्परिक प्रेम होता है ॥ ३९९ ॥

प्रश्नकाल में यदि सप्तम स्थान उच्च हो तो रूप, लावण्य, वंश आदि से स्त्री पति से उत्तम होती है ॥ ४०० ॥

---

1. प्रियः for पतिः A, A[1] 2. सप्तमो for सप्तमे A, A[1]. 3, सम्पदौ for सम्मदौ A, A[1] 4. ०तरा for तरी A. 5. लग्नेशजा येशौ for जायापतिर्लग्ने A. 6. The text reads वदेत् for भवेत 7. तुंगं for तुंगे A, A[1]., Bh.

भार्यास्थानं यदा तुंगमुदितं सौम्यसंयुतम् ।
तदा रङ्ककुलोत्थस्य भार्या भवति भूपजा ॥४०१॥
सप्तमे क्रूरिते[1] भावे चतुर्थे सौम्यसंयुते ।
धृता तस्य भवेद्भार्या परिणीता मृतैव हि ॥४०२॥
सप्तमे यदि राहुः स्यात् पृच्छायां जन्मलग्नतः ।
या यात्र परिणीता स्यात् सा सा पत्नी मृतैव हि ॥४०३॥
सप्तमे तुर्यगे वापि[2] क्रूरे शुक्रबलोत्थिते ।
परिणीता धृता वापि जीवत्येव न वर्णिनी ॥४०४॥
सप्तमं तुर्यगं चापि[3] तुंगं सौम्ययुतं भवेत् ।
परिणीता धृता वापि द्वे स्तो रुचिरकन्यके ॥४०५॥
जायागृहांकमानेन भार्यासंख्या विलोक्यते ।
जायागृहानुमानेन जायासंख्या सतां मता ॥४०६॥
मित्रक्षेत्रे ग्रहे सौम्ये स्वीया पत्नी सदैव हि ।
शत्रुक्षेत्रे ग्रहे सौम्ये परपत्नी सुखावहा ॥४०७॥

---

स्त्रीस्थान में उदित शुभग्रह यदि उच्च का हो तो दरिद्र कुल में विवाह होने पर भी वह स्त्री रानी के समान होती है ॥ ४०१ ॥

सप्तमस्थान यदि पापग्रहों से युक्त हो और चौथे में शुभग्रह हों तो स्त्री की मृत्यु हो ॥ ४०२ ॥

प्रश्न में जन्मलग्न से यदि सप्तम में राहु हो, जिस जिस स्त्री से विवाह वा सम्बन्ध हो वही मर जाय ॥ ४०३ ॥

सप्तम वा चतुर्थ स्थान में पापग्रह रहें और शुक्र से संबन्ध रखते हों तो विवाहित वा संबद्ध भी स्त्री मर जाती है ॥ ४०४ ॥

सप्तम वा चतुर्थ स्थान उच्च का अथवा किसी शुभग्रह से युक्त हो तो विवाहित वा सम्बन्ध वाली स्त्री अच्छी ही होगी ॥ ४०५ ॥

सप्तमस्थान के ग्रहों की संख्या के अनुमान से ही स्त्रीसंख्या देखी जाती है ॥ ४०६ ।

शुभग्रह यदि मित्र के घर में रहें तो स्त्री अपनी सदा रहती है । शत्रु के घरमें यदि शुभग्रह रहें तो दूसरे की पत्नी सुखावह होती है ।४०७॥

---

1. क्रूरितो for क्रूरिते A[1] 2. यदि तुर्ये वा for तुर्यगे वापि A. 3. A read वापि for चापि ।

सप्तमे धिषणे शुक्रे रूपलावण्यशालिनी ।
आद्ये पितृकुले [1] जाता कर्णविश्रान्तलोचना ॥४०८॥
बालः शशी बुधश्चापि कुमारीं ब्रूवतः स्त्रियम् ।
रूपोपेतां प्रसूतां च गुरुर्वक्ति नितम्बिनीम् ॥४०९॥
शुभग्रहो गुरुः प्रश्ने सर्वांगद्युतिशालिनीम् ।
सौम्येक्षितस्तु शुक्रोऽपि सलावण्यां सुलोचनाम् ॥४१०॥
तेजोयुक्तां कुजो ब्रूते रामां रूपेण वर्जिताम् ।
शनिराहू च सक्रूरौ दुर्गुणां वदतोऽवशाम् ॥४११॥
वृद्धां रविः शनिश्चापि जरतीं योषितं पुनः ।
शुक्रभौमौ च खेटौ द्वौ वदतो हन्त कर्कशाम् ॥४१२॥
यदि पृच्छति नार्येषा दृष्टदोषा कुमारिका ।
अदृष्टपुरुषा साध्वी निर्दोषा स्यात्कुमारिका [2] ॥४१३॥

---

सप्तमस्थान में यदि गुरु और शुक्र रहें तो स्त्री, रूप-लावण्य-युक्त, कुलीना तथा विशाल नेत्रों वाली होती है ॥ ४०८ ॥

जिसकी जन्मकुण्डली में चन्द्र और बुध बाल्यावस्था को प्राप्त हों तो कुमारी स्त्री मिले । यदि गुरु रहें तो सुन्दरी स्त्री मिले ॥ ४०९ ॥

प्रश्नकाल में गुरु शुभग्रह में हों तो सर्वांगसुन्दरी स्त्री की प्राप्ति हो। यदि शुक्र शुभग्रहों से देखे जांय तो लावण्यवती सुनेत्रा स्त्री की प्राप्ति हो ॥ ४१० ॥

मंगल रहे तो स्त्री तेजवाली किन्तु रूपरहित होगी ।शनि और राहु यदि किसी अन्य भी पापग्रहों से युक्त हों तो स्त्री दुर्गुणा और पराधीन होवे ॥ ४११ ॥

रवि रहे तो वृद्धा, शनि रहे तो भी वृद्धा, शुक्र और मंगल हो तो कर्कशा स्त्री होती है ॥ ४१२ ॥

यदि प्रश्न हो कि यह स्त्री दोषयुक्त कुमारिका अथवा दोषरहित पतिव्रता है ॥ ४१३ ॥

---

1. गृहे for कुले A. 2. In A, A[1] this line follows the next line beginning with लग्नलग्नेश

लग्नलग्नेशचन्द्राश्च स्थिरराशौ भवन्ति चेत् ।
अदृष्टपुरुषा ज्ञेया कुमारी स्वगृहेऽपि हि ॥४१४॥
स्थिरराश्यन्यराशौ चेद् भौमेन[1] सह चन्द्रमाः ।
कुमार्यदृष्टदोषैव तदा वाच्या विचक्षणैः ॥४१५॥
लग्नलग्नेशचन्द्राश्च चरराशौ भवन्ति चेत् ।
सा परपुरुषाक्रान्ता कनी वाच्या बुधैस्तदा[2] ॥४१६॥
शनिचन्द्रौ यदा लग्ने वसतः कामिता सदा[3] ।
द्विरूपे चरराशौ वा चन्द्रो भवति चेद्यदि ॥४१७॥
मूललग्नं स्थिरं तत्र दोषः खलकृतो भवेत् ।
यदि पृच्छति येनैषा प्रसता वरवर्णिनी ॥४१८॥
शुक्रे चन्द्रे[4] बुधे सिंहे त्वेवंयोगे प्रसूतिका ।
वृश्चिके बुधशुक्रौ चेद् वृषे वा तिष्ठतो[5] यदि ।
एवं योगे समायाते प्रसूता युवती मता ॥४१९॥

तो यदि लग्न, लग्नेश और चन्द्रमा स्थिर राशि के हों तो वह कन्या अपने घर में निर्दोष होकर रहे ॥ ४१४ ॥

चन्द्रमा यदि मंगल के साथ रहकर स्थिर अथवा अन्य राशि में रहे तो भी वह कन्या अदूषित होती है ॥ ४१५ ॥

लग्न, लग्नेश और चन्द्रमा यदि चर राशि में हों तो वह कन्या अन्य पुरुष के साथ फंसी हुई कहनी चाहिये ॥ ४१६ ॥

शनि और चन्द्रमा यदि लग्न में हों तो वह कन्या सदा कामुकी रहे। यदि चन्द्रमा चरराशि अथवा द्विस्वभाव राशि में रहे तो भी कन्या सदा कामुकी रहती है ॥ ४१७ ॥

यदि जन्मलग्न स्थिरराशि हो तो दुष्ट से दूषित अथवा प्रसूता कन्या कहनी चाहिये ॥ ४१८ ॥

शुक्र चन्द्रमा, बुध सिंह में वा बुध और शुक्र वृश्चिक अथवा वृष में यदि हों तो वह स्त्री प्रसववती कहनी चाहिये ॥ ४१९ ॥

1. सौम्येन for भौमेन A[1] 2. तदा for सदा A., 3. वस्तुतो कामिता तदा Bh. 4. कुंभे for चन्द्रे A. 5. संस्थितौ for तिष्ठतः A.

द्विस्वभावे विलग्ने चेत्पापराशिविवर्जिते ।
भौमबुधेन्दुशुक्राः स्युरग्रेऽपत्यं[1] स्थितं[2] तदा ॥४२०॥
पापग्रहाश्चरे राशौ सम्भवन्ति यदापि हि ।
तदावश्यं बुधैर्ज्ञेयमपत्यं परपौरुषात् ॥४२१॥
क्रूरग्रहाः स्थिरे राशौ प्रश्ने यदि भवन्ति चेत्[3] ।
हृदयं सदयं ध्येयमपत्यं निजवल्लभात् ॥४२२॥
मिश्रग्रहाः स्थिरे राशौ पृच्छायां संभवन्ति चेत् ।
तदा ध्रुवं नरैर्वाच्यमपत्यं मिश्रपौरुषात् ॥४२३॥
स्वभर्तुरन्यभर्तुर्वा योषा जातात्र गुर्विणी ।
इति प्रश्ने बुधैश्चिन्त्यं पञ्चमस्थानकं[4] किल ॥४२४॥
दृश्यते शनिभौमाभ्यां सोमदृष्टिविवर्जितम् ।
पञ्चमं यदि गेहं स्यात्तदा गुर्वी परान्नरात् ॥४२५॥

मंगल, बुध, चन्द्रमा और शुक्र यदि पापग्रहों से हीन द्विस्वभाव लग्न में हों तो सन्तान को आगे में कहना चाहिये ॥ ४२० ॥

---

यदि पापग्रह चर राशि में हों तो वह सन्तान अवश्य ही दूसरे पुरुष से उत्पन्न होवे ॥ ४२१ ॥

पापग्रह यदि प्रश्नकुण्डली में स्थिर राशि में रहें तो वह संतान अवश्य ही अपने पति से हो ॥ ४२२ ॥

प्रश्नकाल में यदि स्थिर राशि में मिश्र ग्रह अर्थात् शुभ और अशुभ दोनों ग्रह हों तो वह सन्तान मिश्र पुरुष अर्थात् स्वपिता और परपिता से उत्पन्न कहनी चाहिये ॥ ४२३ ॥

वह स्त्री अपने वा पराये पति से गर्भवती हुई है—ऐसे प्रश्न में पञ्चम स्थान को देखना चाहिये ॥ ४२४ ॥

पञ्चम स्थान यदि शनि और मंगल से देखा जाय और चन्द्रमा की दृष्टि उस पर न हो तो वह गर्भ परपुरुष से समझना चाहिये ॥४२५॥

---

1. रग्नो for रग्रे A. 2. स्थिरं for स्थितं A., A[1] 3. भवन्ति यद्ग्रहो for यदि भवन्ति चेत् A. 4. स्थानकं पंचमं for पंचमस्थानकम् A.

न दृष्टं शनिभौमाभ्यां सोमदृष्टं च पञ्चमम् ।
तदा नूनं बुधैर्वाच्यं स्वकान्तादेव गुर्विणी ॥४२६॥
अथाशुभयुतोऽर्कः सेन्दुर्यदि जीवो न लग्नमिन्दुर्वा ।
जीवः सार्कं नेन्दुं पश्यति गर्भः परैर्जातः ॥४२७॥
यदि लग्नपजायापौ खलु वीक्षेते परस्परं पूर्वम्[1] ।
प्रीतिःपूर्णा[2] खण्डा खण्डितदृष्टा[3] वधूवरयोः ॥४२८॥
सौम्यग्रहैः शुभारामा सुशीला भर्तृवत्सला ।
क्रूरग्रहैस्तु दुःशीला भर्तृविद्वेषिणी मता ॥४२९॥
श्रीमद्देवेन्द्रसूरीणां शिष्येण ज्ञानदर्पणः ।
विश्वप्रकाशकश्चक्रे श्रीहेमप्रभसूरिणा ॥४३०॥

इति सप्तमस्थानप्रतिबद्धं जायाप्रकरणम् ।

---

यदि पञ्चमस्थान शनि और मंगल ग्रहों से न देखा जाय और चन्द्रमा की दृष्टि रहे तो वह स्त्री अपने पति से ही गर्भवती होती है ॥ ४२६ ॥

चन्द्रमा से युक्त सूर्य पापग्रह से युक्त हो वा बृहस्पति लग्न और चन्द्रमा को नहीं देखता हो अथवा सूर्य से युक्त चन्द्रमा को बृहस्पति नहीं देखता हो तो जार पुत्र कहें ॥ ४२७ ॥

यदि लग्नेश और सप्तमेश परस्पर पूर्ण दृष्टि देखते हों तो स्त्री-पुरुष में पूर्ण प्रीति होती है और यदि खण्डित दृष्टि वाले हों तो प्रेम खण्डित रहता है ॥ ४२८ ॥

लग्नेश और सप्तमेश यदि सौम्यग्रहों से देखा जाय तो स्त्री सुशीला और भर्तृप्रिया होती है । यदि वे पापग्रहों से देखा जाय तो वह पतिद्वेषिणी होती है ॥ ४२९ ॥

श्री देवेन्द्रसूरि के शिष्य श्रीहेमप्रभसूरि ने विश्वप्रकाशक और ज्ञानदर्पण इस ग्रन्थ को रचा ॥ ४३० ॥

---

1. पूर्णां for पूर्वम् A. 2. पूर्णा प्रीतिः for प्रीतिःपूर्णा A. 3. दृष्ट्वा for दृष्टा A.

## अथ स्त्रीजातकम् ।

क्रूरलग्नोद्भवा नारी स्वमपश्यति लग्नपे ।
पतिं न रञ्जयत्येषा क्रूरत्वेनाप्यहंकृता ॥४३१॥
कर्मस्थे[1] मङ्गले जाता स्वैरिणी कुलदूषिका ।
निःशुक्राथ पतेर्द्वेष्या चिरं[2] भ्रमति वेश्मसु ॥४३२
द्वौ शुभौ दुर्जनक्षेत्रेऽप्यन्यः क्रूरो विलग्नगः[3] ।
तत्र लग्ने ध्रुवं जाता स्त्री भवेद्विषकन्यका[4] ॥४३३॥
द्वादशेऽप्यष्टमे भौमे क्रूरे तत्रैव संस्थिते ।
राहौ विलग्ने नूनं रण्डा भवति कन्यका ॥४३४॥

क्रूर लग्न में उत्पन्न स्त्री, जब लग्नेश लग्न को न देख रहा हो, क्रूरता के व्यवहार से, अहंकार के कारण अपने पति को प्रसन्न नहीं करती ॥ ४३१ ॥

मंगल दशमस्थान में यदि रहे तो वह स्त्री अपनी इच्छा से घूमने वाली और अपने वंश को दूषित करने वाली, शुक्ररहित तथा पतिद्वेषिणी बनकर चिरकाल तक लोगों के घरों में घूमती फिरती है ॥ ४३२ ॥

दो शुभ ग्रह यदि पापग्रह की राशि में हों और एक पापग्रह लग्न में रहे तो ऐसे लग्न में उत्पन्न कन्या विषकन्या ही समझी जाय ॥ ४३३ ॥

द्वादश वा अष्टम स्थान में मंगल रहे और अन्य भी पापग्रह उसमें रहें और लग्न में राहु रहें तो वह कन्या अवश्य विधवा होगी ॥ ४३४ ॥

1. स्थि for स्थे A. 2. स्वैरं for चिरं Bh. पतेर्द्वेष्याश्चि (स्वैरं A¹) भ्रमति for पतेर्द्वेष्या चिरं भ्रमति A, A⁴ 3. The text reads विलग्नतः for विलग्नगः । Samhitasara quotes a verse of similer interest and ascribes it to Trailokyaprakasa. The verse is the following.

रिपुक्षेत्रस्थितौ द्वौ तु लग्ने यत्र शुभौ ग्रहौ ।
क्रूरश्चैव तदा जाता भवेत् स्त्री विषकन्यका ॥

Compare also Ranavirajyotirnibandha Strijataka P. 517 :

भौमादित्यशनौ लग्ने जाता भवति दुर्भगा ।
सौम्यस्वोच्चे स्वके जाता सुभगा भवति भामिनी॥४३५॥
स्त्रीजातके च लग्नेशे ग्रहान्तरसुहृद्युते ।
उपपत्तिः श्रियां[1] वाच्या[2] निश्चितं यौवनोद्धतौ[3] ॥४३६॥
मूर्तौ राह्वर्कभौमेषु रामा[4] भवति वर्णिनी ।
एषु शुक्रद्वितीयेषु पतिमन्यं चिकीर्षति ॥४३७॥
नीचे भौमे शनौ वास्ते[5] राहावपि च तत्रगे[6] ।
आजन्म रमणेनैव[7] स्वेच्छाचारी पुनर्धना ॥४३८॥
सप्तेऽस्ते[8] स्वपतित्यक्ता नवोढैव कुजेऽथवा ।
क्रूरदृष्टे[9] शनौ नार्या वार्द्धकं यौवने भवेत् ॥४३९॥

लग्न में मंगल, सूर्य, शनि रहें तो उत्पन्न कन्या कुत्सितयोनि वाली होगी और यदि शुभग्रह अपने उच्च स्थान में रहें तो कन्या सुन्दर योनि वाली होती है ॥ ४३५ ॥

लग्नेश यदि दूसरे किसी मित्रग्रह से युक्त हों तो निश्चय ही युवावस्था में कन्या की उत्पत्ति कहनी चाहिये ॥ ४३६ ॥

लग्न में राहु, सूर्य और मंगल यदि हों तो स्त्री विधवा होती है। इन में से यदि कोई ग्रह शुक्र के साथ बैठा हो तो वह दूसरे पति की इच्छा करती है ॥ ४३७ ॥

मंगल, शनि यदि नीच स्थान में वा अस्त रहें और वहीं राहु भी रहे तो वह स्त्री आजन्म अपने पति के साथ स्वेच्छापूर्वक रमण करती है ॥ ४३८ ॥

सूर्य वा मंगल सप्तम स्थान में रहें तो नवोढा रहने पर भी वह अपने पति से परित्यक्ता हो जाती है । यदि दूसरे पापग्रह की दृष्टि शनि पर रहे तो यौवन में ही बुढ़ापा आजाता है ॥ ४३९ ॥

---

1 स्त्रियां for श्रियां A. 2. वाच्यो for वाच्या A. 3. तः for तौ A. यौवणोद्धते Bh. 4. रण्डा for रामा Bh. 5. चास्ते for वास्ते Bh 6 The text reads चभंगगे for च तत्रगे 7. मरणेनैव for रमणेनैव A, A[1] 8. The text reads स्वे for स्ते 9. दृष्टिः for दृष्टे A, A[1]

क्रूरमात्रे पतित्यक्ता घनैः क्रूरैः पतिर्नहि ।
सुरूपा सा भवेन्नारी सप्तगेहगतैर्ग्रहैः ॥४४०॥
द्यूने भौमनवांशे मंदगदृष्टे सरोगयोनिः स्त्री ।
तत्रैव शुभनवांशे चारुश्रोणी प्रिया पत्युः[1] ॥४४१॥

इति स्त्रीजातकम् ।

मघा रेवती मूलं च ज्येष्ठाश्लेषा तथाश्विनी ।
वर्जयेदृतुकाले च षडेतानि हि नान्यभम् ॥४४२॥
योनिस्थाने[2] स्थिते चन्द्रे शुक्रे तत्रैव संस्थिते ।
रतेः सुखं स्त्रियो वाच्यं नखसीत्कारपेशलम् ॥४४३॥
गुरौ लग्ने सिते द्यूने चन्द्रे च सुखवेश्मनि ।
रूपलावण्ययुक्तानां रतं यूनां सुखास्पदम् ॥४४४॥
अस्ते शुक्रे युते क्रूरैः सुखं पीडा च जायते ।
चन्द्रशुक्रौ यदा तत्र सुखाधिक्यं तदा मतम् ॥४४५॥

सप्तमस्थान में यदि पापग्रह हों तो वह स्त्री पतित्यक्ता हो जाय। यदि उस स्थान में अधिक पापग्रह होवें तो पति मर जाय। यदि सात भावों में सब ग्रह स्थित हो जांय तो स्त्री सौभाग्यवती होती है ॥ ४४० ॥

सप्तमस्थान में मंगल के नवांश में यदि शनि की दृष्टि रहे तो स्त्री योनिदोषवती होती है। उसी स्थान में यदि शुभग्रह का नवांश हो जाय तो स्त्री सुन्दरी तथा पतिप्रिया होती है ॥ ४४१ ॥

ऋतुकाल में मघा रेवती, मूल, ज्येष्ठा, आश्लेषा और अश्विनी इन ६ नक्षत्रों को अवश्य छोड़ना चाहिये, अन्य नक्षत्रों को नहीं ॥ ४४२ ॥

चन्द्र और शुक्र यदि योनिस्थान में रहें तो उस स्त्री को मैथुनजन्य सुख कहना चाहिये ॥ ४४३ ॥

लग्न में गुरु, सप्तम में शुक्र और चतुर्थस्थान में यदि चन्द्रमा रहे तो रूप लावण्ययुक्त युवकों को स्त्रीसुख कहना चाहिये ॥ ४४४ ॥

शुक्र यदि सप्तम स्थान में रहे तथा क्रूर ग्रहों से युक्त हो तो सुख और दुख दोनों होते हैं। यदि चन्द्रमा और शुक्र एक साथ रहें तो अधिक सुख कहना चाहिये ॥ ४४५ ॥

1. सौभाग्याढ्या शुभैर्युक्ते for चारु...पत्यु : A, A[1] 2. स्थान for स्थाने A, A[1]

गुरुणा सहितौ तौ च सप्तमे वाथवाष्टमे ।
महासौख्यं रतेर्वाच्यं मुदितैर्मुदितस्त्रियाः ॥४४६॥
स्वगृहे[1] स्वर्क्षगैः सौम्यैः परगेहेऽन्यगेहगैः ।
मित्रौकसि तु मित्रस्थैः[2] रतं शुभस्त्रिया सह ॥४४७॥
अस्ते शुक्रे च शीतांशौ ससौख्यं सुरतं मतम् ।
सगुरौ चन्द्रशुक्रे च कर्पूरादि [3]मुखाश्रयम् ॥४४८॥
क्रूरे सौम्ये च सायासं सोद्वेगं कलहाश्रयम् ।
भोगवर्जं शनौ वाच्यं मैथुनं पूतधीधनैः[4] ॥४४९॥
एकं रतं चरे वाच्यं स्थिरलग्ने रतद्वयम् ।
द्विस्वभावे तु लग्ने तु रतत्रयमुदाहृतम् ॥४५०॥
तुर्ये गुरौ रतं वाच्यमुत्तमे[5] देववेश्मनि ।
भग्नदेवगृहे भूमौ गुरौ नीचे रतं मतम् ॥४५१॥

यदि चन्द्रमा और शुक्र गुरु के साथ सप्तम तथा अष्टम स्थान में रहें तो आनन्दयुक्त स्त्री के साथ आनन्दित पुरुषों को मैथुन-सुख होता है ॥ ४४६ ॥

शुभग्रह अपने घर में रहें तो अपने घर में, अन्य राशि में रहें तो दूसरों के घर में, मित्रस्थान में रहें तो मित्र के घर में, सुन्दर स्त्री के साथ भोगविलास कहना चाहिये ॥ ४४७ ॥

सप्तमस्थान में यदि शुक्र और चन्द्रमा रहें तो सुखसहित मैथुन होता है । चन्द्रमा और शुक्र यदि गुरु के साथ रहें तो कपूर आदि सुगन्धित द्रव्यों से सुवासित मैथुन होता है ॥४४८॥

सप्तम स्थान में शुभ और पापग्रह दोनों रहें तो आयास, उद्वेग और कलह से युक्त मैथुन होता है । शनि यदि सप्तम स्थान में रहे तो आनन्दशून्य मैथुन कहना चाहिये ॥ ४४९ ॥

प्रश्नलग्न यदि चर हो तो एक वार, स्थिर लग्न हो तो दो वार, द्विस्वभाव लग्न रहे तो तीन वार मैथुन कहना चाहिये ॥ ४५० ॥

चतुर्थ स्थान में गुरु रहे तो उत्तम देवालय में मैथुन कहना चाहिये । वही गुरु यदि नीच का हो तो जीर्ण देवालय में मैथुन कहना चाहिये ॥ ४५१ ॥

1. स्वगृहे : for स्वगृहे ms. 2. मित्रस्थे for मित्रस्थैः Ms. 3. ०सुखा० for ०मुखा० A A[1], Bh. 4. मिथुनं श्रुतधीधनैः for मैथुनं पूतधीधनैः A, A[1] Bh. 5. मुत्तगे for मुत्तमे A[1]

भौमे महानसे भूमौ सभयं सुरतं पुनः ।
शुक्रे च सजले स्थाने गीतनृत्यादिशालिनि ॥४५२॥
चन्द्रे शुक्रे च वाप्यादौ रतं प्रोक्तं सुखाश्रयम्[1] ।
कुञ्जमध्ये[2] बुधे तूर्ये रतं रम्यं कथादिभिः[3] ॥४५३॥
शनौ राहौ च गर्तायां रवौ चतुष्पदाश्रयम् ।
एवं ग्रहानुमानेन[4] रतस्वरूपमादिशेत् ॥४५४॥

इति सप्तमस्थाने द्वितीयं सुरतप्रकरणम् ॥

## अथ परचक्रागमनप्रकरणम् ॥

चरे लग्ने स्थिरे[5] चन्द्रे समायाति रिपोर्बलम् ।
चरे चन्द्रे स्थिरे लग्ने शत्रुर्नायाति भूपतिः ॥४५५॥
चन्द्रलग्नौ स्थिरस्थौ चेत् तदा याति रिपोर्बलम् ।
चन्द्रोदयादपि द्व्यङ्के शत्रुर्मार्गान्निवर्तते ॥४५६॥

---

मंगल यदि सप्तम स्थान में रहें तो रसोई घर में सभय मैथुन, शुक्र रहें तो जलाश्रयस्थान में जहां नृत्य, गीत आदि होते रहें मैथुन कहना चाहिये ॥ ४५२ ॥

चन्द्र और शुक्र यदि सप्तमस्थान में रहें तो सुखदायक स्थानों में और यदि बुध चतुर्थ स्थान में रहे तो कथा आदि से युक्त तथा किसी कुञ्ज में मैथुन कहना चाहिये ॥ ४५३ ॥

शनि, राहु यदि उक्त स्थान में रहें तो गड्ढे में, रवि रहें तो गोशाला आदि में, इस तरह ग्रहों की स्थिति के अनुसार मैथुन कहना चाहिये ॥ ४५४ ॥

चर राशि यदि लग्न में हो और चन्द्रमा स्थिर राशि में हो तो शत्रु की सेना आजाती है। चन्द्रमा यदि चर राशि में हो, लग्न स्थिर राशि का हो तो शत्रु नहीं आता ॥ ४५५ ॥

चन्द्र और लग्न दोनों स्थिर राशि के हों तो शत्रु की सेना आजाय। चन्द्र और लग्न यदि द्विस्वभाव राशि में रहें तो शत्रु मार्ग से ही लौट जाय ॥ ४५६ ॥

---

1. सुखावहम् for सुखाश्रयम् A. 2. पुञ्ज० for कुञ्ज A, A[1] 3. कथादिना for कथादिभिः A. 4. ग्रहानुभावेन for ग्रहानुमानेन A, A[1] 5. चरलग्नस्थिते for चरे लग्ने स्थिरे A.

परचक्रागमं प्राहुश्चरे लग्ने स्थिरे विधौ ।
द्वयोश्चरस्थयोर्वापि नत्वेतस्माद्विपर्यये ॥४५७॥
चरे शशी ततो द्वयङ्गे अर्द्धं गत्वा निवर्तते ।
विपर्यये द्विधा याति क्रूरदृष्टे पराजयः ॥४५८॥
मेषवृषधनुःसिंहा मूर्तौ तुर्ये यदि स्थिताः ।
अग्रहाः सग्रहा वापि रिपुं व्यावर्तयन्ति ते ॥४५९॥
रिपुरायाति बन्धुस्थैः शीघ्रं प्रश्ने शुभग्रहैः ।
चन्द्रार्कौ तु सुखस्थौ चेत्तदा नायान्ति शत्रवः ॥४६०॥
लग्नाभ्रचन्द्रधर्मेशः स्थिरस्थैर्नागमो रिपोः ।
स्थिरग्रहैः स्थिरे लग्ने दृष्टे नैति[1] कदाचन ॥४६१॥

---

लग्न यदि चर राशि में रहे और चन्द्रमा स्थिर राशि के हों तो शत्रुसेना का आगमन होता है। दोनों यदि चरराशि के हों तो शत्रु आवे। इस से विपरीत शत्रु नहीं आसकता ॥ ४५७ ॥

चर राशि में चन्द्रमा रहे, लग्न द्विस्वभावराशि के हों तो शत्रु आधे रास्ते से आकर लौट जाता है। इससे विपरीतावस्था में दो बार आता है। यदि पापग्रह की दृष्टि रहे तो उसकी हार हो जाती है ॥ ४५८॥

मेष, वृष, धनु, सिंह इन्हीं राशियों में से कोई यदि लग्न और चतुर्थ स्थान दोनों में रहे और वे यदि ग्रहों के साथ वा विना ग्रह के रहें तो शत्रु को लौटा देते हैं ॥ ४५९ ॥

प्रश्नकाल में यदि सभी शुभग्रह चतुर्थस्थान में रहें तो शत्रु शीघ्र ही आजाता है। यदि रवि, चन्द्र चतुर्थस्थान में रहें तो शत्रु नहीं आसकते ॥ ४६० ॥

लग्नेश, दशमेश, धर्मेश और चन्द्र यदि स्थिर राशि में हों तो शत्रु का आगमन नहीं होता। लग्न स्थिर राशि रहे और स्थिर ग्रहों से देखा जाय तो भी शत्रु कभी नहीं आते ॥ ४६१ ॥

---

1 नैव for नैति Bh.

लग्नपुण्यपती द्वौ तु युक्तदृष्टौ परस्परम् ।
परागमनकर्तारावन्यथाप्यन्यथा फलम् ॥४६२॥
पुण्यलग्नेशसंबद्धौ चन्द्रलग्नेश्वरौ यदि ।
द्विषदागमकर्तारावन्यग्रहयुतौ नहि ॥४६३॥
सौरिर्जीवोऽथवा लग्ने स्थिरे यदि च संयुतः ।
रिपुरेति तदा नैव रिपुरेति चरैः पुनः ॥४६४॥
अर्कार्किबुधशुक्राणामेकोऽपि स्याच्चरोदये ।
भवेत्तदागमः शत्रोः स्थिरलग्ने न चागमः[1] ॥४६५॥
द्वितीये च तृतीये च गुरोः क्षेत्रे[2]ऽथवा भृगुः ।
बली यदा तदायाति शत्रुस्तत्र बलैर्युतः[3] ॥४६६॥

लग्नेश और धर्मेश की पारस्परिक दृष्टि हो अथवा वे दोनों युक्त ग्रह हों तो शत्रु का आक्रमण अवश्य होता है, अन्यथा रहें तो शत्रु नहीं आते ॥ ४६२ ॥

लग्नेश और चन्द्रमा यदि पुण्यस्थानेश से संबन्ध रखते हों तो शत्रु का आगमन होता है, अन्यग्रहों के साथ युक्त होवें तो शत्रु नहीं आता ॥ ४६३ ॥

शनि अथवा गुरु यदि लग्न में रहें अथवा स्थिर राशि के हों तो शत्रु नहीं आता और यदि वे चर राशि के हों तो शत्रु आजाता है ॥४॥६४

रवि, शनि, बुध, शुक्र इनमें से कोई भी चर लग्न में रहे तो शत्रु का आगमन अवश्य रहे किन्तु स्थिर लग्न होने पर नहीं होता ॥ ४६५ ॥

बली शुक्र यदि द्वितीय, तृतीय अथवा गुरु की राशि में रहें तो शत्रु सेना के साथ आता है ॥ ४६६ ॥

1. च नागमः for न्चागमः A. 2. गुरुक्षेत्रे for गुरोःक्षेत्रे A. 3. For this line the ms. reads बली यदा तदायाति शुक्रो वा धिषणोऽपि वा । तथा तथा समायाति शत्रुस्तत्र बलैर्युत.

परागमनपृच्छायां लग्ने क्रूरः स्थितो यदा[1] ।
तदा शत्रोर्भवेन्मृत्युर्दैवादागच्छतः पथि ॥४६७॥
सुतशत्रुगतैः क्रूरैः[2] शत्रुर्मार्गान्निवर्तते ।
चतुर्थगैरपि प्राप्तः शत्रुर्भग्नो निवर्तते ॥४६८॥

इति सप्तमस्थाने तृतीयं परचक्रागमनप्रकरणम् ॥

अथ सप्तम एव मार्गनिबद्धत्वाद् गमनागमनं निरूप्यते

गमनागमनं प्रोक्तं चरे चन्द्रे चरोदये ।
द्विस्वभावे चरार्द्धे च चरवर्गे[3] विलम्बितम् ॥४६९॥
एतद्विपर्यये नेदं भवतीति विनिश्चितम् ।
चरेष्वपि प्रयाणं [4]स्याद्योगशक्त्या स्थिरोदये ॥४७०॥
अर्कार्किगुरुसौम्यानामेकेनापि चरोदये ।
शीघ्रयानं न तद्वक्रे नेन्दोः[5] स्वाघव्ययैः शुभैः ॥४७१॥

---

शत्रु का आक्रमण होगा वा नहीं ऐसे प्रश्न में यदि कोई पापग्रह लग्न में हो तो अकस्मात् मार्ग में आते हुए शत्रु की मृत्यु हो जाय ॥ ४६७ ॥

पञ्चम, षष्ठ स्थानों में यदि पापग्रह हों तो शत्रु मार्ग में से लौट जाता है । वे पापग्रह यदि चतुर्थ स्थान में हों तो शत्रु अङ्गभङ्ग होकर लौट जाता है ॥ ४६८ ॥

चन्द्र यदि चर राशि में हो और चरलग्न होवे तो आना-जाना ( आसानी से ) होता है । यदि लग्न और चन्द्रमा द्विस्वभाव राशि के हों, चरखण्ड वा चरराशि के वर्ग में पड़े हों तो आना-जाना देरी से होता है ॥ ४६९ ॥

इसकी विपरीतावस्था में यह नहीं होता, यह निश्चित है । चरलग्न में भी यात्रा होती है । स्थिरलग्न में भी योग शक्ति से यात्रा जाननी चाहिये ॥ ४७० ॥

रवि, शनि, गुरु, बुध—इनमें से कोई भी चर लग्न में रहे तो शीघ्र ही यात्रा होगी, यदि वे वक्री हों तो नहीं और यदि चन्द्रमा से शुभ ग्रह द्वितीय लाभ-व्यय स्थानों में हों तो भी नहीं ॥ ४७१ ॥

---

1. यदि for यदा A[1]. 2. पापैः for क्रूरैः A, A[1] 3. स्थिरलग्ने for चरवर्गे Bh. 4. चरे पथि प्रयातं स्या for चरेष्वपि प्रयाणं स्या० A., Bh. 5. तु तद्वक्रे नन्दो for न तद्वक्रे नेन्दोः A., नंदास्त्वर्थे व्यये शुभः Bh.

स्थिरे गमागमौ न स्तः शनिजीवनिरीक्षिते ।
अस्थिरे भवतस्त्वेतौ शुभखेटविलोकितौ ॥४७२॥

चन्द्रलग्नौ द्विदेहस्थौ चिरं वाच्यौ गमागमौ ।
चरादिवर्गगौ युक्त्या वक्तव्यौ कालमात्रया[1] ॥४७३॥

शुक्रार्किबुधजीवानामेकोऽपि चरलग्नगः ।
गमनाय निवृत्तौ तु चेत् स्थिरलग्नमाश्रितः ॥४७४॥

प्रवृत्तिश्च निवृत्तिश्च स्थिता धर्मार्थभावयोः ।
तत्र वीक्ष्या बलाद्यैश्च गमागमनिबन्धनाः[2] ॥४७५॥

शीर्षोदये शुभा यात्रा सैव पृष्ठोदयेऽन्यथा[3] ।
मीनलग्नांशकैर्वापि[4] यानं चक्रं च निष्फलम् ॥४७६॥

स्थिर लग्न रहे और शनि-गुरु की दृष्टि रहे तो आना-जाना नहीं होता। अस्थिर लग्न रहे और शुभ ग्रहों की दृष्टि रहे तो आना-जाना होता है ॥ ४७२ ॥

चन्द्रमा और लग्न द्विस्वभाव राशि के हों तो आने जाने में विलम्ब कहना चाहिये। चर राशि के वर्ग में रहें तो युक्तिपूर्वक, काल के अनुमान से गमनागमन कहना चाहिये ॥ ४७३ ॥

शुक्र, शनि, बुध और गुरु इनमें से कोई भी यदि चरलग्न में हो तो वह यात्रा के लिये प्रवृत्त होता है। वही यदि स्थिर लग्न में हो तो यात्रा नहीं कहनी चाहिये ॥ ४७४ ॥

गमन और आगमन दोनों धर्म और अर्थ भाव के ग्रहों का बला-बल देख कर कहने चाहियें ॥ ४७५ ॥

शीर्षोदय वाले राशि लग्न रहें तो शुभ यात्रा, पृष्ठोदय वाले राशि लग्न रहें तो विपरीत अर्थात अशुभ यात्रा, मीन लग्न का उदय रहे तो आना जाना निष्फल रहे ॥४७६॥

1 कालमात्रय: for कलमात्रया Bh. 2 निबन्धनम् for निबन्धना: Bn. 3. यथा for ऽन्यथा A, A[1] 4. मीनलग्नोदये वापि for मीन-लग्नांशकैर्वापि A, A[1].

मदीयः पुत्रको देशे गत्वा तत्रैव संस्थितः ।
कदायातीति शङ्कायां[1] पृच्छालग्नं निरीक्षयेत् ॥४७७॥
चरे लग्ने चरांशे वा स्थिते चन्द्रे तदैव हि ।
परदेशात्समभ्येति स्वाङ्कसंख्यैश्च[2] यामिकैः[3] ॥ ४७८ ॥
चन्द्रो वा धिषणो वापि भार्गवो वा बलाधिकः ।
यदि तुर्ये समभ्येति तदा गेहागतं[4] वदेत् ॥ ४७९ ॥
प्रयाति सहजस्थानमसौ यस्याशुभग्रहः[5] ।
आयाति पथिकस्तस्यामेव नाड्यां गृहान् प्रति ॥ ४८० ॥
चरोदये चरांशे वा सौम्या यान्ति बलोत्कटाः[6] ।
तदा जवात्समभ्येति दूरादप्यचिरादपि[7] ॥ ४८१ ॥
मार्गे ह्यागच्छतः पुंसो विश्रामो ग्रहसंख्यया ।
अबलानि धनादीनि वाच्यं स्खलनकारणम् ॥ ४८२ ॥

मेरा पुत्र परदेश में जाकर वहीं बैठ रहा है। वह कब आवेगा ऐसे प्रश्न में प्रश्न लग्न को देखना चाहिये ॥४७७॥

चर लग्न अथवा चर राशि के नवांशक में यदि चन्द्रमा रहे और शनि अपने स्थान में हो तो वह परदेश से शीघ्र ही लौट आता है ॥४७८॥

चन्द्रमा, गुरु वा शुक्र बली होकर यदि चतुर्थ स्थान में रहें तो वह घर में आ गया है इस प्रकार कहना चाहिये ॥४७९॥

जिसकी प्रश्न कुण्डली में शुभग्रह तृतीय स्थान में रहें तो वह पथिक उसी समय घर को आ जाता है ॥४८०॥

शुभ ग्रह चर लग्न वा चर राशि के नवांश में सबल हो कर रहें तो दूर से भी वह शीघ्र आ जाय ॥४८१॥

मार्ग में आते हुए पुरुष के ग्रहस्थितिद्वारा विश्राम, बल, धन और विलम्ब के कारण कहने चाहियें ॥४८२॥

1. संख्यायां for शंकायां A. 2. संस्थैश्च for संख्यैश्च A. 3. यामकैः Bh. 4. गृहं गत for गेहागतं A, A[1]. 5. यस्यां for यस्या A, A[1]. यस्य Bh. 6. बलाधिकाः for बलोत्कटाः A, A[1]. 7. दूरादपि चिरादपि for दूरादप्यचिरादपि A. A[1].

लग्नास्तयोर्द्वयोरङ्कास्तुर्यस्यापि भवन्ति चेत्[1] ।
दूराध्वानास्त्वविश्रामा[2] ज्ञातव्याः स्वगृहान्तरे ॥ ४८३ ॥
स्वभावगोऽतिचारो वा मार्गे वक्रगतिस्तथा ।
लग्ननाथस्य या दृग् स्यात् प्रचारः पथिकस्य सः ॥ ४८४॥
लग्नाद्वा लग्ननाथाद्वा यत्संख्ये क्रूरखेचराः ।
मार्गे हि गच्छतो गन्तुस्तत्रापि स्यादुपद्रवः ॥ ४८५ ॥
धने नीचेऽथवा षष्ठे चन्द्रलग्नेश्वरो यदि ।
छिद्रनाथयुतौ मृत्युरिष्टश्चापि प्रवासिनः[3] ॥ ४८६ ॥
प्रश्ने पृष्टोदये लग्ने क्रूरदृष्टे शुभे च्युतैः ।
कोण[4]केन्द्रगतैर्वापि प्रवासी स्यादुपद्रुतः ॥ ४८७ ॥
क्रूर[5]युक्ते क्षितौ मन्दः सौम्येक्षायोगवर्जितः ।
धर्मस्थस्तनुते व्याधिं प्रोषितस्यागमो भवेत् ॥ ४८८ ॥

---

लग्न और सप्तम स्थान के अङ्क यदि चतुर्थ स्थान के भी हों दूर मार्ग चल कर आए हुए पुरुष को घर में विश्राम कहना चाहिये ॥४८३॥

लग्नेश प्रकृतिस्थ रहें वा किसी अन्य राशि में जाने वाले हों अथवा मार्गी वा वक्री रहें वैसी ही स्थिति उस पथिक की होती ह ॥४८४॥

लग्न वा लग्नेश से यत्संख्यक स्थान में पापग्रह हों, मार्ग पर चलते हुए उस पथिक का अनिष्ट कहना चाहिये ॥४८५॥

चन्द्रमा और लग्नेश सप्तम अथवा अपने नीच वा षष्ठ स्थान में रहें और अष्टमेश से संयोग रहे तो उस प्रवासी मनुष्य की मृत्यु कहनी चाहिये ॥४८६॥

प्रश्नकाल म पृष्ठोदय राशि लग्न में हो, पाप ग्रहों की दृष्टि रहे, कोई भी शुभग्रह न रहे अथवा केन्द्र तथा त्रिकोण स्थान में शुभग्रहों से रहित हो तो पथिक को मार्ग में अनिष्ट कहना चाहिये ॥४८७॥

शनि धर्म स्थान में हो और क्रूर ग्रहों से युक्त वा देखा जाय, शुभ ग्रह की दृष्टि अथवा योग न रहे तो वह पथिक रोगी होकर घर को लौट आवे ॥४८८॥

---

1. ये for चेत् ms. 2. दूराध्वनोऽथ for दूराध्वानास्त्व A. 3 प्रवासिनाम् for प्रवासिनः A. 4. कोणे for कोण ms. 5. क्रूरे for क्रूर ms.

लग्नाद्वा लग्ननाथाद्वा यत्संख्ये सौम्यखेचराः ।
मार्गे तत्रोदयो वाच्यः शकुनाश्चापि[1] शोभनाः ॥ ४८९ ॥
अष्टमे तरणौ मार्गे भयं वाच्यं कुजेऽपि वा ।
यावन्तोऽप्यष्टमे खेटाश्चौरास्तावन्त एव हि ॥ ४९० ॥
लग्ने धने तृतीये च सौम्ययुक्तेक्षितेऽपि च ।
तस्करोपद्रवौ[2] नैव वक्तव्यौ[3] मार्गचारिणाम् ॥ ४९१ ॥
यत्र गुरुर्भवेद्द्वो यत्र शुक्रो जलाश्रयः ।
प्रपातडागकूपादि वक्तव्यं गच्छतां पथि[4] ॥ ४९२ ॥
चन्द्रे शुक्रे नदीमार्गे राहुशन्योर्महद्भयम् ।
नृपगेहे गुरौ तुंगे निधिलाभोऽपि भूपतेः ॥ ४९३ ॥

---

लग्न से वा लग्नेश से जितनी संख्या पर शुभ ग्रह पड़े हों प्रश्न काल से उतने ही दिनों में उसका उदय होता है और शुभ शकुन भी होते हैं ॥४८९॥

अष्टम स्थान में यदि सूर्य तथा भौम हों तो मार्ग में भय कहना चाहिये, जितने संख्यक ग्रह अष्टम में स्थित होवें उतने संख्यक चौर से उपद्रव हो ॥४९०॥

यदि लग्न द्वितीय और तृतीय में शुभ ग्रह का योग हो या शुभ ग्रह देखते हों तो पथिक को रास्ते में चौर तथा उपद्रव का भय नहीं होगा ॥४९१॥

जिसको प्रश्न काल में गुरु या शुक्र जलचर राशि में हो उसको रास्ते में जाते समय तालाब कूआं, इत्यादि जलाशय मिलें ॥४९२॥

यदि चन्द्र और शुक्र, जलचर राशि में हों तो नदी के मार्ग से ( अर्थात् नौका या पोत पर यात्रा करे ) जाय यदि राहु और शनि जलचर राशि में हो तो महान् भय कहना चाहिये, और यदि बृहस्पति उच्च का हो तो राजा के घर में हो तथा राजा से निधि का लाभ हो ॥४९३॥

---

1, शत्रुता० for शकुना० A. 2. पद्रवो for पद्रवौ A. 3. वक्तव्यो for वक्तव्यौ A, 4. यदि for पथि A. A[1].

मृगादिदशकं चापि धनिष्ठापञ्चसंयुतम् ।
पञ्चकनामकं ज्ञेयमर्घनिर्णयहेतुकम् ॥ ९९६ ॥
त्रिकयोगे त्रिको योगः पञ्चके पञ्चकः पुनः ।
गृह्यते च त्रिके योगे दीयते पञ्चके धनम् ॥ ९९७ ॥
त्रिके च जीवराशेश्च क्रूरा यदि त्रिके गताः ।
अन्योन्यं वा[1] त्रिके च स्युर्गृह्यते तत्क्रयाणकम् ॥ ९९८ ॥
पञ्चके जीवराशेस्तु गच्छन्ति यदि पञ्चके ।
अन्योऽन्यं पञ्चके वा स्युर्दीयते तत्तदेव हि ॥ ९९९ ॥
यथा धिष्ण्ये त्रिके चन्द्रः क्रेतव्यं तत्क्रयाणकम् ।
यदा च पञ्चके चन्द्रो विक्रेतव्यं तदाखिलम् ॥ १००० ॥

मृगशिरा, आर्द्रा, पुनर्वसु, पुष्य, अश्लेषा, मघा, पूर्वफल्गुनी, उत्तरफल्गुनी, हस्त, चित्र, और धनिष्ठा, शतभिषा, पूर्वभाद्र, उत्तरभाद्र, रेवती, इन नक्षत्रों को अर्घ निर्णय के लिये पंडित पञ्चक संज्ञक कहते हैं ॥९९६॥

---

त्रिकयोग में त्रिकयोग होता है और पञ्चक नक्षत्र के योग में पञ्चक योग होता है, त्रिक योग में वस्तु ग्रहण करना चाहिये, और पञ्चक योग में वस्तु देना चाहिये ॥९९७॥

यदि गुरु के राशि त्रिक में हों या पापग्रह त्रिक में वा दोनों परस्पर त्रिक में हों तो खरीद करने योग्य वस्तु को ग्रहण करना चाहिये ॥९९८॥

यदि गुरु की राशि पञ्चक में हो या पापग्रह पञ्चक में हो वा दोनों परस्पर पञ्चक में हों तो उस वस्तु को उसी समय देना चाहिये ॥९९९॥

जब चन्द्रमा त्रिक में हो तो खरीदने योग्य वस्तु को खरीदना चाहिये, यदि चन्द्रमा पञ्चक में हो तो उस सब वस्तु को उसी समय बेच लेना चाहिये ॥१०००॥

---

1 पञ्चके for वात्रिके A[1]

जीवात्त्रिके तमः सौरिर्भौमा एभ्यो गुरुस्त्रिके ।
अन्योऽन्यं पञ्चके जीवे[1] देहि लाहि त्रिके कणान् ॥१००१॥
मासार्घवर्षार्घाः ।
त्रिके यदि ग्रहाः सर्वे जीवान्मन्दतमः कुजः ।
तदा भुवि महर्घं स्यात्तिथौ वृद्धौ विशेषतः ॥ १००२ ॥
यदा स्याज्जीवयोगेन भत्रिके धिष्ण्यपञ्चके ।
तदा किञ्चिन्महर्घं स्यात् सौम्यवासरगं[2] पुनः ॥ १००३ ॥
पञ्चके चेद्ग्रहाः सर्वे संमिलन्ति यदैव हि ।
तदा भुवि महर्घं स्याद् धिष्ण्यहानौ विशेषतः ॥ १००४ ॥
राशिपञ्चकयोगे तु धिष्ण्यत्रिकं यदा भवेत् ।
तदा किञ्चित्समर्घं स्यात्सौम्यवक्रे[3] शुभं बहु ॥ १००५ ॥
संसिरा तु[4] यदा जीवो राशिनक्षत्रपञ्चके ।
घोरं दौस्थ्यं तदा ज्ञेयमृक्षे न्यूनेति गौरवम् ॥ १००६ ॥

---

गुरु से त्रिक में राहु, शनि, मंगल, हो और उन से त्रिक में गुरु हो या परस्पर दोनों पञ्चक में हों तो क्रयाणक वस्तु देनी चाहिये, यदि दोनों परस्पर त्रिक में हों तो उस वस्तु को महण करें ॥१००१॥

अथ मासार्घ वर्षार्घा:—

यदि जीव से त्रिकमें शनि, राहु, मंगल हों तो पृथ्वी में महर्घ होता है, और तिथि वृद्धि हो तो विशेष महर्घ होता है ॥१००२॥

यदि त्रिक, या पञ्चक नक्षत्र में जीव का योग हो तो कुछ महग होती है, और शुभ ग्रहों का योग हो तो विशेष महग होती है ॥१००३॥

पञ्चक में सब ग्रह सम्मिलत हो जाय तो पृथ्वी में महर्घ होता है, और नक्षत्र का क्षय हो तो विशेष महर्घ होता है ॥१००४॥

पञ्चक, तथा त्रिक, नक्षत्र राशि के योग से कुछ समर्घ होता है, और शुभ ग्रहों को वक्र होने पर बहुत शुभ होता है ॥१००५॥

संसिरा जीव यदि पञ्चक राशि नक्षत्र में हो तो घोर, दौस्थ्य होता है और नक्षत्र का क्षय होने से अत्यन्त गौरव होता है ॥१००६॥

---

1. केप्योते लवेलाहि for जीवे देहि लाहि Bh. 2. वेपेवक for वासरगं A, योगेधिकं Bh. 3 चक्रे for वक्रे Bh. 4. मंसरातु for संसरा तु Bh.

राशिधिष्ण्ये त्रिके पूर्वे ग्रहाः सर्वे भवन्ति चेत् ।
महासौस्थ्यं तदा भूम्यां सौम्यवक्रे महोत्सवः ॥ १००७ ॥

इत्यर्घकाण्डम् ।

नक्षत्रपद्धत्या त्रिकपञ्चकयोगो दर्शितः । साम्प्रतं द्वितीयराशिपद्धत्या त्रिकपञ्चकयोगौ प्रतिपद्दयन् सांवत्सरिकमप्यर्घमंति पादयति —

भानुवक्र[1]तमःक्रोडास्तृतीय[2]स्था गुरोर्यदि ।
सुभिक्षं जायते सत्यमीदृशे योगसंकटे ॥१००८॥

तमोवक्रमविश्राद्याश्चत्वारः क्रूरखेचराः ।
तृतीयस्थाः शनेरेते सौस्थ्यसद्भिक्षकारकाः ॥१००९॥

भानुवक्रतमः क्रोडाः पञ्चमस्था गुरोर्यदि ।
दुर्भिक्षं जायते तत्र घोरं योगे समागते ॥१०१०॥

भानुवक्रतमः क्रोडा द्विपञ्चनवसप्तगाः ।
द्वादशस्था गुरोरेते भञ्जन्ति सकलं जगत् ॥१०११॥

---

त्रिक राशि नक्षत्र में सब ग्रह हों तो पृथ्वी पर महान् सौस्थ्य होता है और शुभ ग्रह वक्री हो तो महान् उत्सव होता है ॥१००७॥

नक्षत्र पद्धति से त्रिक पञ्चक योग दिखाया, अब द्वितीय राशि पद्धति से त्रिक पञ्चक योग को कहते हुए संवत्सर का अर्घ काण्ड कहते हैं ।

यदि सूर्य, मंगल, राहु, ये गुरु से तृतीय में हों तो ऐसे योग संकट में सुभिक्ष होता है ॥१००८॥

यदि शनि से राहु, मंगल, सूर्य आदि के चार पापग्रह तृतीय में हों तो स्वस्थता तथा सुभिक्ष को करते हैं ॥१००९॥

यदि गुरु से सूर्य, मंगल, राहु, ये पंचम में हों तो ऐसे योग में दुर्भिक्ष होता है ॥१०१०॥

यदि गुरु से सूर्य, मंगल, राहु, ये पापग्रह द्वितीय, पञ्चम, सप्तम, नवम द्वादश में हों सम्पूर्ण संसार को नष्ट करता है ॥१०११॥

---

1. तमोवक्र for भानुवक्र A, A[1]. 2. पञ्चमस्था for तृतीयस्था A, A[1].

तमोवक्रसवित्राद्याश्चत्वारः क्रूरखेचराः ।
पञ्चमस्थाः शनेरेते दौस्थ्यदुर्भिक्षकारकाः ॥१०१२॥
मन्दराह्वोरपि क्रूरास्तृतीये सौस्थ्यकारकाः ।
एतयोः पञ्चमाः क्रूराः दुःखदुर्भिक्षहेतवः ॥१०१३॥
बृहस्पतितमःसौरिमङ्गलानां यदैककः ।
त्रिके च पञ्चके कार्यौ धान्यस्य क्रयविक्रयौ ॥१०१४॥
सत्यारतमसो[1] युक्ता धनुर्मीने स्थिता यदा ।
पृथ्वीत्रिभागशेषा च दुर्भिक्षं च तदा भवेत् ॥१०१५॥
त्रिकपञ्चकयोगौ द्वौ व्याख्यातौ गुरुदर्शितौ ।
योगं वदामि रोहिण्या ग्रहयोगाच्छुभाशुभम् ॥१०१६॥
रोहिण्या सौम्ययोगेन क्रूरदर्शनवर्जिते ।
उत्तरगै[2] ग्रहैः सर्वैः सुभिक्षं निश्चितं भवेत् ॥१०१७॥

यदि शनि से पञ्चम में राहु, मंगल, सूर्य, आदि के चार पापग्रह हों तो दुःस्थिति तथा दुर्भिक्ष करते हैं ॥१०१२॥

और शनि, राहु से भी तृतीय में पापग्रह हों तो स्वास्थ्यकारक होते हैं, तथा इन दोनों से पञ्चम में पापग्रह हों तो दुःख, और दुर्भिक्ष का कारण होते हैं ॥१०१३॥

बृहस्पति, राहु, शनि, मंगल, ये एक एक करके यदि त्रिक संज्ञक में हो तो धान्य खरीदना चाहिये, और यदि वे पञ्चक संज्ञक में हों तो धान्य का विक्रय करना चाहिये ॥ १०१४ ॥

शनि, मंगल, राहु, ये सब ग्रह यदि धनु, या मीन में स्थित हों तो पृथ्वी का तृतीयांश ही शेष बचता है और दुर्भिक्ष होता है ॥१०१५॥

गुरु से दिखाये हुए उन दोनों त्रिक, पञ्चक योगों को मैंने कहा, और अब ग्रहों के योग से रोहिणी का शुभाशुभ फल कहता हूं ॥१०१६॥

रोहिणी में शुभग्रहों का योग हो और उस पर पाप ग्रहों की दृष्टि नहीं हो और सब ग्रह उसके उत्तर मार्ग में हों तो निश्चय सुभिक्ष होता है ॥ १०१७ ॥

1. शन्यारतमः सौ for सत्यारतमसो A. 2. उत्तरगै० for उत्तरगो० A.

चन्द्रस्तोकमपि व्योम्नि रोहिणीशकटं स्पृशन्[1] ।
उद्गच्छति यदा वाच्यं दुर्भिक्षं तत्र नित्यशः ॥१०१८॥
रोहिण्या यदि मध्येन चन्द्रो गच्छति पाटयन्[2] ।
तदा दुस्थं विजानीयात्[3] क्रूरयुक्ते विशेषतः १०१९॥
अथ चन्द्रो यदा ब्राह्मीं दक्षिणेनैव गच्छति ।
दुर्भिक्षेण तदा भूमेर्युगान्त इव जायते ॥१०२०॥
रोहिण्यामेकनक्षत्रे स्यातां चन्द्रदिवाकरौ[4] ।
द्वितीयायां प्रजाहानिर्दुर्भिक्षेण भयेन वा ॥१०२१॥
कुजः शनिर्वा राहुर्वा भिनत्ति यदि रोहिणीम् ।
ध्रुवं तदा पयाम्भोधौ निमज्जति जगज्जनः ॥१०२२
यदि तत्र च चन्द्रारराहुमन्दास्तु दक्षिणाः ।
तस्यास्तदा बुधैर्वाच्यो महांश्च प्रलयो भुवः ॥१०२३॥

आकाश में चन्द्रमा थोड़ा भी रोहिणी शकट का भेदन करता हुआ उदय हो तो वहां नित्य दुर्भिक्ष होता है ॥ १०१८ ॥

यदि चन्द्रमा रोहिणी शकट के मध्य को भेदन करता हुआ उदय हो तो दुस्थिति होती है और यदि पापग्रह का योग हो तो विशेष दुःस्थिति होती है ॥ १०१९ ॥

यदि चन्द्रमा रोहिणी शकट के दक्षिण से जाय तो पृथ्वी में युगान्त के समान दुर्भिक्ष होता है ॥ १०२० ॥

यदि चन्द्रमा, सूर्य, दोनों एक साथ, द्वितीया को रोहिणी नक्षत्र में हों तो दुर्भिक्ष से तथा भय से प्रजा की हानि होती है ॥ १०२१ ॥

मंगल, शनि, वा राहु, यदि रोहिणी शकट को भेदन करें तो निश्चय संसार के लोग पानी में डूबते हैं ॥ १०२२ ॥

यदि चन्द्रमा, मंगल, राहु, शनि, रोहिणीशकट के दक्षिण में हों तो पण्डित लोग पृथ्वी का महाप्रलय कहें ॥ १०२३ ॥

1. स्पृशेत for स्पृशन् A. 2. गच्छन् विपाटयन् for गच्छति पाटयन् A. 3. तदा हि दुस्थं जानीयात for तदा दुस्थं विजानीयात् A. 4. चेत्स्यातां चन्द्रभास्करौ for स्यातां चन्द्रदिवाकरौ A.

चन्द्रमण्डलमध्येन वेधं कुर्वन्ति चेद्ग्रहाः ।
दुर्भिक्षं जायते ऽवश्यं विग्रहोऽप्यन्तरान्तरा ॥१०२४॥
यदा ग्रहेण सौम्येन क्रूरेणापि च सम्मुखः ।
विद्धः क्रूरः शुभो वापि दुर्भिक्षं तत्र निश्चितम् ॥१०२५॥
सर्वनक्षत्रमध्येन रोहिणी पतिता त्रिके ।
सौम्ययोगे शुभे च स्यादशुभा क्रूरयोगतः ॥१०२६॥

इति रोहिणीयोगाः ।

अथाषाढीयोगं वच्मि —

मीनसंक्रान्तिकाले च पौष्णभागे दिने भवेत् ।
यत्र विद्युच्छुभो वातस्ततो गर्भो ध्रुवो भवेत् ॥१०२७
मेषसंक्रान्तिकालात्तु नवस्वपि दिनेष्वपि ।
यत्राभ्रं वातविद्युत्स्यादार्द्रादौ तत्र वर्षति । ॥१०२८॥

---

यदि चन्द्रमण्डल के मध्य से ग्रह वेध करें तो अवश्य दुर्भिक्ष होता है और मध्य मध्य में विग्रह भी होता है ॥ १०२४ ॥

यदि शुभग्रह या पाप ग्रह से पाप, या शुभ ग्रह का सम्मुख वेध हो तो निश्चय दुर्भिक्ष होता है ॥ १०२५ ॥

त्रिक नक्षत्र में सब नक्षत्र से रोहिणी यदि पतित हो तो शुभग्रह के योग से शुभ होता है और अशुभ ग्रह के योग से अशुभ होता है ॥ १०२६ ॥

इति रोहिणीयोगः

मीन संक्रांति काल में रेवती नक्षत्र हो उस दिन यदि विद्युत् तथा शुभ वायु बहे तो वहां निश्चय गर्भ समझना चाहिये ॥ १०२७ ॥

मेष संक्रांति काल से नौ दिनों में जिस दिन जहां पर मेघ, वायु, विद्युत हो तो आर्द्रा आदि क्रम से उस नक्षत्र में वहां वर्षा होती है ॥ १०२८ ॥

किं वा नवसु यामेषु वाताआदि शुभं भवेत् ।
तस्यां च दिशि[1] संपूर्णं तद्दिनेऽप्यखिले जलम् ॥१०२९॥
आषाढ्यां घटिकाषष्ठ्यां मासद्वादशनिर्णयः ।
द्वादश पञ्चका षष्ठिरित्येवं क्रममादिशेत् ॥१०३०॥
पञ्चनाडी भवेन्मासः षष्ठ्या[2] वर्णस्य[3] निर्णयः ।
सर्वरात्रं यदाभ्राणि वातौ पूर्वोत्तरौ यदि ॥१०३१॥
तत्र वर्षे कणाः पुष्टा भवन्ति जगतीप्सिताः ।
यदि नाभ्रस्य लेशोऽपि वातौ पूर्वोत्तरौ नहि ॥१०३२॥
न वर्षति तदा देवो[4] दुष्टकालो भवेदिह ।
यद्यभ्रं स्वल्पकं जातं मध्ये वातेषु वर्षति ॥१०३३॥
आद्ये मासे यदाभ्राणि वातौ पूर्वोत्तरौ यदि ।
आद्ये मासे भवेद्वृष्टिर्वाञ्छितादधिका क्षितौ ॥१०३४॥

---

वा, मेष संक्रांति काल से नौ प्रहरों में जिस दिशा में शुभ वायु, मेघ, विद्युत हो तो, उस दिशा में आर्द्रा आदि क्रम से उस नक्षत्र में वर्षा होती है ॥ १०२६ ॥

आषाढ़ी पूर्णिमा में साठ घटी पर से द्वादश मासों का निर्णय करें, साठ घड़ी को द्वादश भाग करने पर पांच पांच घटी के क्रमसे आदेश करें ॥ १०३० ॥

पांच घटी से एक मास का तथा साठ घटी से वर्ष का फल निर्णय करें, यदि सम्पूर्ण रात्रि मेघ, तथा पूर्वी उत्तरी वायु बहे तो ॥ १०३१ ॥

उस वर्ष में अभीप्सित धान्य होता है, और यदि आषाढ़ी में मेघ का लेश भी नहीं हो तथा पूर्वी, उत्तरी वायु नहीं बहे ॥ १०३२ ॥

तो इन्द्र वर्षा नहीं करते हैं और दुष्ट काल होता है, यदि थोड़ा भी मेघ, तथा वायु वहे तो वर्षा होती है ॥ १०३३ ॥

यदि पहले मास के घटी विभाग में मेघ, तथा पूर्वी उत्तरी वायु बहे तो पहले मास में इच्छा से अधिक वर्षा होती है ॥ १०३४ ॥

---

1. तस्यां च दिशि for यस्यां दिशि च A. 2. षष्ठ्यां for षष्ठ्या A, Bh. 3. वर्षस्य for वर्णस्य Bh. 4. मेघो for देवो A.

आषाढ्यां च विनष्टायां नूनं भवति निष्कणम् ।
ग्रहणाद्यैरिश्चपाताद्यैः सत्यं नश्यति पूर्णिमा ॥१०३५॥
दिनभागे निशाभ्राणि यदा भवन्ति तत्क्षणम् ।
तत्र मासे भवेद्वृष्टिर्वातैरपि शुभैः शुभा ॥ १०३६ ॥
यथाषाढीदिने रात्रिस्तथाषाढश्च निश्चितः ।
प्रमाणघटिकाः[1] पञ्च पञ्चैव श्रावणः स्मृतः ॥ १०३७ ॥
पञ्चभाद्रपदो मासस्ततः पञ्चाश्विनः स्मृतः ।
अथाभ्रकुलनाडीषु[2] वातौ पूर्वोत्तरौ यदि ॥ १०३८ ॥
तत्र मासे भवेद् वृष्टिः पवनाभ्रादि मानतः ।
तत्र रात्रावपि ज्ञेयाः पवनाभ्राः सर्वदिग्गताः ॥ १०३९ ॥
वृष्ट्यादिरहितैरभ्रैः पूर्णिमा सुखदायिनी ।
वृष्टिकणान् धनान् दत्ते पर्वाद्युत्पातवर्जिताः ॥ १०४० ॥

यदि आषाढ़ी पूर्णिमा नष्ट हो तो निश्चय धान्य नहीं होता, ग्रहण आदि से तथा नक्षत्रपात से पूर्णिमा नष्ट होती है ॥ १०३५ ॥

दिन या रात्रि में जिस क्षण में मेघ दीख पड़े उस मास में वर्षा होती है और शुभ वायु से शुभ होता है ॥ १०३६ ॥

आषाढ़ी पूर्णिमा की रात्रि में आषाढ़ का निश्चय करें, पांच पांच घटी का एक एक मास का प्रमाण होता है, इस तरह पांच घटी का श्रावण मास हुआ ॥ १०३७ ॥

पांच घटी का भाद्रमास, और पांच घटी का आश्विन मास, मासों में जिस मास के घटीविभाग में मेघ तथा पूर्वी उत्तरी वायु बहे ॥ १०३८ ॥

उस मास में वायु तथा मेघ आदि के मान से वर्षा होती है, और उस रात्रि में भी सब दिशाओं में वायु तथा मेघ, आदि का विचार करें ॥ १०३९ ॥

वृष्टि आदि से तथा उत्पात से रहित मेघ पूर्णिमा में दिखाई दे तो वह पूर्णिमा सुख, वर्षा, धान्य, तथा धन आदि देने वाली होती है ॥ १०४० ॥

1. प्रथम for प्रमाण A. 2. यत्राभ्रा for यत्राभ्र A.

दिने रात्रिविभागे च यदाभ्राणि भवन्ति चेत् ।
तत्र काले ध्रुवं वृष्टिर्भुक्तनाडीप्रमाणतः ॥ १०४१ ॥
येषु मासेषु ये दग्धा गर्भाः पौषादिसम्भवाः ।
तद्रात्रौ पञ्चनाडीषु चन्द्रो भवति निर्मलः ॥ १०४२ ॥
दग्धा गर्भाश्च ये पूर्वमुत्पातैः शीतकालजैः ।
आषाढीमध्यतस्तेन चन्द्रमास्तत्र निर्मलः ॥१०४३॥
पौषादिसम्भवे गर्भे ध्रुवमुत्पातसम्भवः ।
तेनाषाढीदिनं सर्वं द्रष्टव्यं वृष्टिहेतवे ॥ १०४४॥
यथाषाढीदिनं रात्रिरभ्रैर्वातैश्च पूरितम् ।
तदा गर्भाःशुभा ज्ञेयाः शीतकालेऽपि धीमता ॥१०४५॥
एकमेव दिनं प्रेक्ष्यं कालनिष्पत्तिहेतवे ।
अष्टयामाभ्रवातो चेद्वर्षं यावत्तदा शुभम् ॥१०४६॥

---

दिन या रात्रि में जिस घटीविभाग में मेघ हो, भुक्तघटी के प्रमाण से उस मास में अवश्य वर्षा होती है ॥ १०४१ ॥

जिन मासों का पौष आदि मासों में गर्भ नष्ट हो गया हो उस रात्रि में उन मासों के पांच घटीविभाग में चन्द्रमा निर्मल दिखाई देते हैं ॥ १०४२ ॥

पहले शीत काल में जिस मास का गर्भ नष्ट हो गया हो, आषाढ़ी पूर्णिमा में उस मास के घटीविभाग में चन्द्रमा निर्मल दिखाई देते हैं ॥ १०४३ ॥

पौष आदि मासों में गर्भ सम्भव में अवश्य उत्पात का सम्भव होता है, इसलिये आषाढ़ी पूर्णिमा में सम्पूर्ण दिन वर्षा के लिये देखना चाहिये ॥ १०४४ ॥

जैसे आषाढ़ी पूर्णिमा के सम्पूर्ण दिन रात्रि मेघ तथा वायु से युक्त हो तो शीत काल में भी गर्भ शुभ जाने ॥ १०४५ ॥

काल निष्पत्ति के लिये एक ही दिन देखना चाहिये, यदि आठों प्रहर में मेघ तथा वायु हो तो वर्षपर्यन्त शुभ होता है ॥ १०४६ ॥

आषाढ्यां पूर्विकाषाढा वर्षं यावत् शुभंकराः ।
आवर्षं मध्यमं धान्यं देशे सर्वत्र कथ्यते[1] ॥१०४७॥
अभ्रं विना यदा रम्यौ वातौ पूर्वोत्तरौ यदि ।
यत्र याम्यार्द्धके[2] तत्र मासे वृष्टिर्हठाद्भवेत् ॥१०४८॥
आषाढीयोगाः ।
मासाभिधाननक्षत्रं राकायां क्षीयते यदा ।
महर्घं च तदावश्यं वृद्धौ ज्ञेया समर्घता ॥१०४९॥
मासनामकनक्षत्रं राकायां न भवेद्यदा[3] ।
महर्घं च तदावश्यं तन्नियोगे[4] विशेषतः ॥१०५०॥
धिष्ण्यवृद्धिदिने चन्द्रः क्रूरैर्यदि न दृश्यते ।
समर्घं जायते पुष्टं क्रूरदृष्टे महर्घता ॥१०५१॥

आषाढ़ी पूर्णिमा में यदि पूर्वाषाढ़ा नक्षत्र हो तो वर्ष पर्यन्त शुभ होता है, और सम्पूर्ण वर्ष धान्य की निष्पत्ति तथा प्रजा का सौख्य इन्यादिक सब देशों में होता है ॥ १०४७ ॥

आषढ़ी पूर्णिमा में जिस यामार्द्ध में मेघ को छोड़कर सुन्दर पूर्वी तथा उत्तरी वायु वहे तो उस मास में हठात् वर्षा होती है ॥१०४८॥

इति आषाढीयोगाः ।

मासों का नाम नक्षत्र पूर्णिमा में यदि क्षय हो जाय तो महर्घ होता है और यदि उस नक्षत्र की वृद्धि हो तो समर्घ होता है ॥१०४६॥

मासों का नाम नक्षत्र यदि पूर्णिमा में नहीं हो तो अवश्य महर्घ होता है उसके नियोग में विशेष रूप से कहते हैं ॥१०५०॥

जिस दिन नक्षत्र की वृद्धि हो और चन्द्रमा पापग्रहों से नहीं देखे जाते हों तो समर्घ होता है, और उस पर पापग्रहों की दृष्टि हो तो महर्घ होता है ॥१०५१॥

---

1. For this line A reads, आवर्षं धान्यनिष्पत्तिः प्रजासौख्य-मविग्रहात । 2. यामार्द्धिके for याम्यार्द्धिके A. 3. क्षीयते यदि for न भवेद्यदा Bh. 4. तिथि for तन्नि Bh. तत्र A.

धिष्ण्यवृद्धिर्दिने यत्र तिथेः पार्श्वाद् गरीयसी ।
दिने तत्र समर्घं स्यात्तिथिवृद्धौ महर्घता ॥१०५२॥

ऋक्षवृद्धौ रसाधिक्यं कणाधिक्यं च निश्चितम् ।
योगाधिक्ये रसोच्छेदो दिनार्घः प्रत्यहं स्फुटम् ॥१०५३॥

षड्भिश्च नाडिकाभिश्च धिष्ण्यवृद्धिः क्रमाद् यदा ।
प्रत्येकं च तिथेर्यत्र समर्घं तत्र जायते ॥१०५४॥

षड्भिश्च नाडिकाभिश्च धिष्ण्यवृद्धिः क्रमाद् यदा ।
प्रत्येकं तत्र धिष्ण्ये च महर्घं विद्धि निश्चितम् ॥१०५५॥

तिथिनक्षत्रयोर्वृद्धिं विज्ञाय प्रत्यहं द्वयोः ।
सर्वं टिप्पनकं ज्ञात्वा लाभालाभौ विनिर्दिशेत् ॥१०५६॥

यावन्नाड्य उडोवृद्धिः समर्घं तद्विशोपकाः ।
यावन्नाड्यस्तिथेर्वृद्धिर्महर्घं तत्प्रमाणकम् ॥१०५७॥

---

जिस दिन नक्षत्र की वृद्धि हो तो उस दिन वहां समर्घ होता है, और तिथि वृद्धि हो तो महर्घ होता है ॥१०५२॥

नक्षत्र की यदि वृद्धि हो तो रस, तथा कण का आधिक्य होता है, और योग का आधिक्य होने पर रस का उच्छेद होता है ऐसे अर्थ का निश्चय करें ॥१०५३॥

जब छः छः घटी के क्रम से नक्षत्र की वृद्धि हो तथा प्रत्येक तिथि की वृद्धि हो तो वहां समर्घ होता है ॥१०५४॥

जब छः छः नाड़ी के क्रम से नक्षत्र की वृद्धि हो तो प्रत्येक नक्षत्र में महर्घ होता है ॥१०५५॥

तिथि, और नक्षत्र, इन दोनों की वृद्धि प्रत्येक दिन जान कर तथा पूर्वोक्त सब विषयों को विचार कर लाभ या हानि का आदेश करें ॥१०५६॥

जितनी घड़ी नक्षत्र की वृद्धि हो उतने विशोपक प्रमाण समर्घ होता है, और जितनी घटी तिथि वृद्धि हो उतने प्रमाण महर्घ होता है ॥१०५७॥

भाद्रपदपौषमाघे सितपक्षे पतति या तिथिस्तस्याः ।
द्विगुणदिनैर्नृपमरणं यदि वा दुर्भिक्षमतिरौद्रम् ॥१०५८॥

पूर्णिमास्याममावास्यां संलग्नस्तारकाक्षयः ।
महर्घं तत्र पूर्वार्घान्मासमध्येऽपि जायते ॥१०५९॥

मासमध्ये यदा द्वौ तु योगौ च त्रुटयतः क्रमात् ।
महर्घे घृततैले द्वे योगे वृद्धौ समर्घके ॥१०६०॥

वर्षाकाले त्रिमासेषु नक्षत्रं वर्द्धते स्फुटम् ।
तिथिस्त्र्युटयति संलग्ना शुभः कालस्तदा बहु ॥१०६१॥

वर्षाकाले त्रिमासेषु नक्षत्रं त्रुटति स्फुटम्[1] ।
तिथिश्च वर्धते तत्र ध्रुवं लोको विनश्यति ॥१०६२॥

अधिकोना समा वा स्यान्नक्षत्रात् पूर्णिमा यदा ।
महर्घं च समर्घं च तुल्यार्घमशनं क्रमात् ॥१०६३॥

---

भाद्र, पौष, माघ, इन मासों के शुक्ल पक्ष में जिस तिथि का क्षय हो तो उस से उस तिथि के द्विगुण दिन में जाकर राजा का मरण होता है वा दुर्भिक्ष और अत्यन्त रौद्र समय होता है ॥१०५८॥

यदि पूर्णिमा, अमावास्या, दोनों में लगातार तारा का क्षय हो तो वहां मास के मध्य में भी पूर्वार्घ से महर्घ होता है ॥१०५६॥

एक मास के मध्य में यदि दो योगों का क्षय हो तो क्रम से घृत तैल दोनों महर्घ होता है, और योग की वृद्धि हो तो समर्घ होता है ॥१०६०॥

वर्षा काल में तीनों मास में लगातार नक्षत्र की वृद्धि, तथा तिथि का क्षय हो तो बहुत शुभ काल होता है ॥१०६१॥

यदि वर्षा काल में तीनों मास में नक्षत्र का क्षय हो और तिथि की वृद्धि हो तो अवश्य लोगों का नाश होता है ॥१०६२॥

यदि पूर्णिमा में उस मास के नाम नक्षत्र से अधिक या, ऊन, या, सम नक्षत्र हो तो क्रम से महर्घ, समर्घ, तुल्यार्घ, होता है ॥१०६३॥

---

1. ध्रुवम् for स्फुट A.

पूर्वात्रयं मूलमघा च सार्पिरौद्री च हीना तिथितो यदि स्यात् ।
कुहूदिने चैव कणा महर्घाः पूर्वार्धतः स्युर्जगतीविहीनाः॥१०६४॥

मार्गादिपञ्चमासेषु आद्यपक्षे[1] तिथिक्षयः[2]
दौस्थ्यं वा छत्रभंगो वा जायते राजविग्रहः ॥१०६५॥

शुक्लपक्षे यदा शुक्रः करोत्यस्तमनोदयम् ।
राजपुत्रसहस्राणां मही पिबति शोणितम् ॥१०६६॥

आदित्यग्रासकाले च दुर्भिक्षं प्रायशः पुनः ।
तत्तिथिधिष्ण्यवाच्यानि महर्घाणि भवन्ति हि ॥१०६७॥

द्वयोराषाढयोर्मध्ये यदा पर्वत्रयं भवेत् ।
क्षितौ भवेन्महायुद्धं नृपमृत्युः स्फुटः स्मृतः ॥१०६८॥

तिष्यपुष्यमघाब्राह्मी रेवतीत्युत्तरेषु च ।
यदा शनिर्भवेद् वाच्यो विग्रहोऽपि तदा महान् ॥१०६९॥

पूर्वफल्गुनी, पूर्वाषाढ़, पूर्वभाद्र, मूल, मघा, अश्लेषा, आर्द्रा, ये नक्षत्र यदि तिथि से हीन हों तो अमावास्या में पूर्वार्ध से कण महर्घ होता है और पृथ्वी शस्यहीन होती है ॥१०६४॥

मार्गशीर्ष आदि पांच मासों के शुक्ल पक्ष में यदि तिथिक्षय हो तो दुःस्थिति, तथा छत्रभंग, राजाओं में विग्रह होता है ॥१०६५॥

जब शुक्ल पक्ष में शुक्र का अस्त तथा उदय हो तो हजारों क्षत्रियों का शोणित पृथ्वी पीती है ॥१०६६॥

सूर्य के ग्रहण काल में प्रायः दुर्भिक्ष होता है, उस तिथि नक्षत्र में महर्घ होता है ॥१०६७॥

पूर्वाषाढ़ तथा उत्तराषाढ़ नक्षत्र के मध्य में तीनों पर्व ( चतुर्दशी, अमावास्या, पूर्णिमा ) हों तो पृथ्वी पर महायुद्ध होता है और राजा का नाश होता है ॥१०६८॥

स्वाती, पुष्य, मघा, रोहिणी, रेवती, उत्तरफल्गुनी; उत्तराषाढ़, उत्तरभाद्र, इन नक्षत्रों में यदि शनि हो तो महान् विग्रह होता है ॥१०६९॥

1. शुक्ल for आद्य A. 2. ०क्षये for ०क्षयः A.

वर्षाकाले परीवेषः सूर्येन्दोश्चेद् यदा भवेत् ।
चतुर्दिवसमध्ये च देवो वर्षति भूतले ॥१०७०॥
ऐन्द्रं धनुर्यदोदेति प्रभाते पश्चिमाश्रितम् ।
तद्दिने[1] पञ्चमे यामे घनः प्लावयति महीम् ॥१०७१॥
यत्र राशौ भवेत्पर्व तस्या वाच्यं क्रयाणकम् ।
अत्यर्घं लभ्यते मूल्यं[2] पीड्यमानं च राहुणा ॥१०७२॥
यत्र राशौ कुजो याति चक्रं[3] तत्र सुनिश्चितम् ।
तद्वाच्यानि क्रयाणानि महर्घाणि भवन्ति हि ॥१०७३॥
मकरे मङ्गले सौख्यं ततः[4] कुम्भे च पञ्चके ।
यदा गच्छेत्तदा दौस्थ्यं तुलायामपि मंगलः ॥१०७४॥
पञ्चवर्षं[5] परीवेषो वारुणे मण्डले यदा ।
तदा वेगवती वृष्टिर्जायते यामपञ्चके ॥१०७५॥

---

वर्षाकाल में सूर्य चन्द्रमा का यदि परिवेष हो तो चार दिन के अन्दर पृथ्वी पर वर्षा होती है ॥१०७०॥

प्रातःकाल में पश्चिम दिशा में यदि इन्द्रधनुष का उदय हो तो उसी दिन पांच प्रहर में मेघ पृथ्वी को डुबा देता है ॥१०७१॥

जिस राशि में पर्व हो उस राशि से क्रयाणक कहें, यदि वह राशि राहु से पीडित हो तो बहुत महर्घ वस्तु मिले ॥१०७२॥

जिस राशि में मंगल जाता है उस राशि में निश्चय क्रयाणक महर्घ होता है ॥१०७३॥

मकर में मंगल हो तो सौख्य होता है, और कुम्भ से पांच राशि में यदि मंगल जाय तो दौस्थ्य होता है ॥१०७४॥

यदि वारुण मण्डल में पांच याम परिवेष हो तो पांच वर्ष तक बहुत वृष्टि होती है ॥१०७५॥

---

1. तद्दिनात् for तद्दिनं Bh. 2. शून्यं for मूल्यं A. 3. वक्रं for चक्रं Bh. 4. तमः for ततः Bh 5. वर्षा for वर्षं A.

चटन्ति भुजगा वृक्षे यदि भूतापपीडिताः ।
चतुर्दिवसमध्ये तु वृष्टिसिक्ता धरा मता ॥१०७६॥

ऊर्ध्वा चेद्गडरी[1] शेते घर्मातिशयपीडिता ।
तदा वर्षति पर्जन्यश्चतुर्दिवसमध्यतः ॥१०७७॥

अम्लं तक्रं च तत्कालं लोहे कट्टस्तथैव[2] हि ।
चतुर्दिवसमध्ये तु मेघवृष्टिर्घना मता ॥१०७८॥

कर्पासरसमांजिष्ठा बहुमूल्यास्तदा स्मृताः ।
सक्रूरे मंगले विद्धे क्रूरान्तरगतेऽपि च ॥१०७९॥

चतुर्दशी तु आषाढी हीना वर्षे यदा भवेत् ।
भावाश्रयेण तद् वाच्यं महर्घं च समे समम् ॥१०८०॥

आषाढी त्वधिका तस्याः समर्घं तु तदा मतम् ।
संवत्सरस्य वर्तिन्याः शून्यपाते तु निष्कणम् ॥१०८१॥

---

सर्प यदि पृथ्वी के ताप से पीड़ित होकर वृक्ष पर चढ़ें तो चार दिन के अन्दर पृथ्वी वर्षा से सिक्त होती है ॥१०७६॥

घर्म से अतिशय पीड़ित होकर यदि गडरी उर्ध्वाभिमुख सोवे तो इन्द्र चार दिन के अन्दर वर्षा करते हैं ॥१०७७॥

यदि अम्ल, तक्र, लोहा, कट्ट आदि का पात हो तो चार दिन के अन्दर वर्षा होती है ॥१०७८॥

मंगल और पापग्रहों से युक्त हो, या विद्ध हो या पाप ग्रहों के अन्तर में हो तो कार्पास आदि का बहुत मूल्य होता है ॥१०७९॥

जिस वर्ष में आषाढ़ की पूर्णिमा तथा चतुर्दशी की हानि हो तो महर्घ होता है, इस प्रकार भाव के आश्रय से महर्घ और सम होने से समान कहना चाहिये ॥१०८०॥

यदि आषाढ़ी अधिक हो तो समर्घ होता है, इस प्रकार जिस वर्ष में उसका क्षय हो तो कण नहीं होता है ॥१०८१॥

---

1. कुररी for गडरी Bh. we have adopted the reading of A. Amb. text reads उर्वाचे गडरी शेते । A[1] reads ऊर्ध्वा चेद्गाद्गरी शेते । 2. किट्ट for कट्ट A.

इत्यघकाण्डे त्रिकपञ्चकयोगाः । आषाढीयोगाः रोहिणी—

योगाश्च समाख्याताः[1] ॥

अतः परं चूडामणिसारोद्धारेणार्घकाण्डमुच्यते ।

अर्घकाण्डं प्रवक्ष्यामि नरेन्द्रक्षोभकारकम् ।

येन विज्ञातमात्रेण क्षेमलाभौ यथा ध्रुवौ ॥१०८२॥

पूर्वमासाभिधानं च प्रष्टुर्नाम[2] लिखेत्ततः ।

स्थापयेद् ध्रुवकं भिन्नं सूक्ष्मवर्णक्रमेण च ॥ १०८३ ॥

कुसुमा निर्मलाः ख्याताः प्रश्ना ग्राह्या यथोद्भवाः ।

स्वराणां द्विगुणा संख्या वर्णसंख्या समा भवेत् ॥ १०८४ ॥

मासभाण्डस्थितो राशिर्गणयेत् प्रश्नसंख्यया ।

मात्रासंख्याहते भागे शेषांकैः फलमादिशेत् ॥१०८५ ॥

मासस्य ध्रुवके हीनं भाण्डस्थाने ध्रुवं भवेत् ।

तस्मिन् मासे च तद् भाण्डं महर्घं च भविष्यति ॥१०८६॥

---

इत्यर्घकाण्डे त्रिकपञ्चकयोगाः । आषाढीयोगाश्च
रोहिणीयोगाश्च समाख्याताः ॥
अतः परं चूडामणिसारोद्धारेणार्घकाण्डमुच्यते ॥

अब अर्घ काण्ड को कहते हैं जो कि राजा को भी क्षोभ कारक होता है, जिसको जानते ही निश्चय क्षेम और लाभ होता है ॥१०८२॥

पहले अभीष्ट मास का नाम उसके बाद भाण्ड का नाम लिखें तब सूक्ष्म वर्णों के क्रम से पृथक् ध्रुवा की स्थापना करें ॥१०८३॥

प्रश्न में ख्यात निर्मल पुरुषों का नाम ग्रहण करके उसकी स्वर संख्या को द्विगुण करें और वर्ण संख्या को समान ही स्थापित करें ॥१०८४॥

मास और भाण्डस्थित राशि को मात्रा संख्या से गुणा करें और वर्णों की संख्या से भाग देवें जो शेष बचे उससे फल का आदेश करें ॥१०८५॥

यदि मास की ध्रुवा ( शेष ) हीन हो और भाण्ड स्थान में अधिक हो तो उस मास में वह भाण्ड महर्घ होगा ॥ १०८६ ॥

---

1. A adds जलयोगाश्च before समाख्याताः 2. भाण्ड० for प्रष्टु० Bh.

विलोमं दृश्यते यत्र समर्घं तत्र जायते ।
उभये विषमे तद्वद् व्याख्यातं च समे समम् ॥ १०८७ ॥
मासस्य ध्रुवके भूरिभाण्डस्थानेऽणुकं यदि ।
समर्घं च तदादिष्टं वीतरागेण जन्मिनाम् ॥ १०८८ ॥
उभयोः स्थानके शून्यं महर्घमिति दृश्यते ।
अर्घान्तरमिति ज्ञात्वा प्रमाणं तत्र कारयेत् ॥ १०८९ ॥
इति चूडामणिसूक्ष्माक्षराङ्कप्रमाणेनार्घकाण्डम् ।
मण्डलाभिप्रायेणापि कथ्यते ।
अग्निमण्डलनक्षत्रैर्यदा संक्रमते रविः ।
सहितो भौमवारेण सस्पृहा धातुजातयः ॥ १०९० ॥
रूप्यसौवर्णकांस्यादित्रपुताम्राणि पित्तलम् ।
[1]वातधिष्ण्यैस्तु सङ्क्रान्तिः शनौ वारे विशेषतः ॥ १०९१ ॥

यदि विलोम हो अर्थात मास की ध्रुवा अधिक हो और भाण्ड की हीन हो तो उस मास में समर्घ होता है। दोनों के विषम होने पर ऐसा फल होता है, और यदि दोनों समान हों तो समान फल होता है ॥१०८७॥

यदि मास की ध्रुवा अधिक हो और भाण्ड की ध्रुवा हीन हो तो समर्घ होगा ऐसा आदेश करें ॥ १०८८ ॥

यदि दोनों के स्थान में ध्रुवा शून्य हो तो महर्घ होता है, इस प्रकार अर्घान्तर को भी देखकर इसका प्रमाण करें ॥ १०८९ ॥

इति चूडामणिसूक्ष्माक्षराङ्कप्रमाणेनार्घकाण्डम् ।
अथ मण्डलाभिप्रायेणापि कथ्यते ।

यदि अग्निमंडलनक्षत्र में मंगलवार रवि की संक्रान्ति हो तो धातुजाति सस्पृहा होती है ॥ १०९० ॥

यदि वायु मंडल नक्षत्र में शनिवार रवि की संक्रान्ति हो तो चान्दी सोना, कांश्य, त्रपु, ताम्र, पित्तल, आदि धातुओं की विशेष मांग होती है ॥ १०९१ ॥

1. शत० for वात० A,

लोहभेदाः रसाः सर्वे शीघ्रं भवन्ति सस्पृहाः ।
नक्षत्रैर्वारुणैर्वापि बुधवारेण संक्रमे ॥ १०९२ ॥
पच्यन्ते धान्यभेदास्तु रत्नान्यम्भोधिजानि च ।
नक्षत्रैः पार्थिवैर्वापि सूर्यवारसमन्वितैः ॥ १०९३ ॥
सस्पृहा ये सुगन्धाढ्या वारणादिचतुष्पदाः[1] ।
अथवा सर्वमासेषु पूर्णिमायां दिवानिशम् ॥ १०९४ ॥
अन्वेषयेत्तदुत्पातात् परिवेषोर्कसोमयोः ।
यस्मिन्मण्डलधिष्ण्ये च दुर्निमित्तं च दृश्यते ॥ १०९५ ॥
तन्मण्डलस्य वाच्याश्च क्षणाद्भवन्ति सस्पृहाः ।
एवं द्वारेण संक्रान्तेरर्घकाण्डं प्रदर्शितम् १०९६ ॥

अथ मण्डलानि

ज्येष्ठानुराधारोहिण्यौ धनिष्ठा श्रवणस्तथा ।
अभीचिरुत्तराषाढा शुभं माहेन्द्रमण्डलम् ॥ १०९७ ॥

---

यदि वारुण मंडल नक्षत्र में बुधवार रवि की संक्रान्ति हो तो लोहा तथा रस जाति सस्पृहा होती है ॥ १०९२ ॥

यदि माहेन्द्र मण्डल नक्षत्र में रविवार रवि की संक्रान्ति हो तो धान्यादि, तथा रत्न, और समुद्र से उत्पन्न होने वाले मुक्ता आदि पचित होते हैं ॥ १०९३ ॥

और सुगन्धित द्रव्य, हाथी आदि के चतुष्पद भी सस्पृह होते हैं. अथवा सब मासों में पूर्णिमा को रात्रिन्दिवा देखें ॥ १०९४ ॥

उत्पात से तथा सूर्य चन्द्रमा के परिवेष से अन्वेषण करें जिस मण्डल के नक्षत्र में दुर्निमित्त देख पड़े ॥ १०९५ ॥

उस मण्डल को उसी क्षण सस्पृहा कहें. इस प्रकार संक्रान्ति के द्वारा अर्घ काण्ड को दिखलाया ॥ १०९६ ॥

अथ मण्डलानि

ज्येष्ठा, अनुराधा, रोहिणी, धनिष्ठा, श्रवण, तथा अभिजित् उत्तराषाढ़ा, ये नक्षत्र माहेन्द्र मंडल कहलाते हैं यह मण्डल शुभकारक होता है ॥ १०९७ ॥

---

1. वारुण for वारण A. A[1].

आर्द्राश्लेषा शतभिषक् पूर्वाषाढा च रेवती ।
मूलमुत्तरभद्रा च वारुणं शुभकारणम् ॥ १०९८ ॥
भरणी कृत्तिका पुष्यो विशाखा पूर्वफाल्गुनी ।
पूर्वभद्रा मघा चेति चाग्नेयमशुभप्रदम् ॥ १०९९ ॥
चित्रास्वातिमृगाश्विन्यः पुनर्वसुकरौ तथा ।
उत्तरा फाल्गुनी चैव वायव्यमशुभप्रदम् ॥ ११०० ॥
उल्कापातादयः सर्वेऽमीषु स्वसुफलप्रदाः ।
वर्षाकालं विना ज्ञेया वर्षाकाले च वृष्टिदाः[1] । १००१॥
माहेन्द्रं सप्तरात्रेण सद्यो वारुणमण्डलम् ।
आग्नेयमर्द्धमासेन फले मासेन पावनम् ॥ ११०२ ॥
सुभिक्षं क्षेममारोग्यं राज्ञां सन्धिः परस्परम् ।
आद्यं मण्डलयोर्ज्ञेयं तद्विपरीतमन्त्ययोः ॥ ११०३ ॥

---

आर्द्रा, अश्लेषा, शतभिषा, पूर्वाषाढ़ा, रेवती, मूल, उत्तराभाद्र, ये नक्षत्र वारुण मण्डल कहलाते हैं, यह मण्डल शुभकारक होता है ॥ १०९८ ॥

भरणी कृत्तिका, पुष्य, विशाखा, पूर्वफल्गुनी, पूर्वभाद्र, मघा, ये नक्षत्र आग्नेय मण्डल कहलाते हैं, यह मण्डल अशुभ कारक होता है ॥ १०९९ ॥

चित्रा, स्वाती, मृगशिरा, अश्विनी, पुनर्वसु, हस्त, उत्तराफाल्गुनी ये वायव्य मण्डल कहलाते हैं. यह मण्डल अशुभ कारक होता है ॥ ११०० ॥

वर्षा काल को छोड़ कर और समय में यदि इन मण्डलों में उल्कापात इत्यादिक हो तो शुभ फल देते हैं, और वर्षा काल में हो तो वर्षा होती है ॥ ११०१ ॥

माहेन्द्र मण्डल में सात दिन में वारुण मण्डल में सद्यः आग्नेय मण्डल में आधा मास में और वायु मण्डल में मास में फल होता है ॥ ११०२ ॥

पहले दोनों ( माहेन्द्र, वारुण, ) मंडल में सुभिक्ष, क्षेम, आरोग्य और राजाओं में परस्पर सन्धि होती है, और अन्त्य के दोनों (आग्नेय, वायव्य, ) मण्डल में उसका विपरीत फल होता है ॥ ११०३ ॥

---

1, वर्षदाः for वृष्टिदाः A.

माहेन्द्रे वारुणे चैव हृष्टा भवन्ति धनवः ।
उत्पाताः प्रलयं यान्ति धरणी वर्द्धते शिवैः[1] ॥ ११०४ ॥
फलन्ति तरवः कल्पद्रुमा इव नवैः फलैः ।
प्राप्नुवन्ति प्रजासौख्यं राज्यानीव हि भूमिपाः[2] ॥ ११०५ ॥
वायौ वह्निमहोत्पाताः पीडयन्ति प्रजापुरः ।
गावः शुष्यन्ति वृक्षाश्च पीड्यन्ते विग्रहैर्जनाः ॥ ११०६ ॥
निष्कणा जायते पृथ्वी राजानो जनपीडकाः ।
उद्वशाः सततं देशाः मेघो नत्र प्रवर्षति ॥ ११०७ ॥
एतैश्च मण्डलैर्ज्ञात्वा सुखदुःखं प्रजोद्भवम् ।
शान्तिं कुर्वन्ति धीमन्तो बलिपूजाविधानतः ॥ ११०८ ॥
पुष्पवत्प्रचुरभाग्यो हेम पुंसा[3] निधिर्नवः ।
वाञ्छितः फलदो नन्याद‍र्घकाण्डं तरुः फली ॥ ११०९ ॥

---

माहेन्द्र, और वारुण मण्डल में गाय प्रसन्न होती हैं, और उत्पात नष्ट होता है, तथा पृथ्वी मंगलों से बढ़ती है ॥ ११०४ ॥

कल्पद्रुम जैसे वृक्षों में नवीन, नवीन, फल, फूल, हुआ करते हैं, जैसे राजा को राज्य से सुख होता है, वैसे प्रजाओं को सौख्य होता है ॥ ११०५ ॥

वायव्य तथा अग्निमण्डल में बहुत उत्पात होता है और प्रजा लोग पीड़ित होते हैं, गौ तथा वृक्ष शुष्क होते हैं और विग्रह से लोग पीड़ित होते हैं ॥ ११०६ ॥

और पृथ्वी में कण नहीं होता। राजा लोग लोगों को पीड़ा करते हैं, और देश किसी के वश नहीं रहता। मेघ वर्षा नहीं करते ॥११०७॥

इन मण्डलों के विचार से प्रजाओं का सुख दुःख जानकर, बुद्धिमान लोग पूजा की बलि इत्यादिक विधान से शान्ति करते हैं ॥ ११०८ ॥

इस प्रकार अर्घ काण्डरूपी फल वाला वृक्ष पुष्प जैसे पुरुषों को बहुत भाग्य, हेम, तथा नया निधि, इत्यादि इच्छानुकूल फल देता है ॥ ११०९ ॥

---

1. शर्वैः for शिवैः A. 2. महीश्वराः for हि भूमिपाः A. 3. हेमः पुमान् for हेम पुंसा A.

इति दिनमासवर्षार्घकाण्डे मण्डलपद्धतिः समाप्ता ।

करस्थं धारयेन्मूलं केतकीतालवृक्षयोः ।
मदोन्मत्तो गजस्तस्य द्वारेणैव[1] हि गच्छति ॥ १११० ॥
अमृतोष्णमरीचीनां दिव्याङ्गकोटिकारणम् ।
स्फुरद्धामण्डलव्याजाद्दर्शयन्तं तु केवलम् ॥ ११११ ॥
दहन्तं तु भयोद्यानं[2] द्योतयन्तं जगत्त्रयम् ।
लक्ष्मीलक्षविधातारं नत्वा पार्श्वं जिनेश्वरम् ॥ १११२ ॥
श्रीमद्देवेन्द्रशिष्याणुः सर्वशास्त्राब्धिपारगः ।
श्रीमान् हेमप्रभः सूरिरर्घकाण्डं स्मरत्यसौ ॥ १११३ ॥
सेतिका[3]मानपल्लीनां संख्यां विज्ञाय साम्प्रतम् ।
बहुष्वप्यर्घकाण्डेषु तथ्य[4]शास्त्रं विरच्यते ॥ १११४ ॥
एकदिनार्धमध्ये तु घटिकार्घस्य कारणम् ।
क्रयं त्रिशतषष्टेश्च मूल्यनिश्चयहेतवे ॥ १११५ ॥
चैत्रे यश्च प्रधानोऽर्घः स पण्यार्घोऽत्र गृह्यते ।
प्रत्यहं प्रसभं वापि[5] प्रतिपण्यं च नूतनः ॥ १११६ ॥

---

इति दिनमासवर्षार्घकाण्डे मण्डलपद्धतिः समाप्ता ।

जो केतकी, तथा ताल वृक्ष के मूल को हाथ में धारण करते हैं और जिन के द्वारा मदोन्मत्त हाथी चलता है, और जो चन्द्रमा, सूर्य के दिव्याङ्ग का कोटि कारण हैं तथा अपने देदीप्यमान तेजमण्डल को व्याज से दिखलाने वाले, जो भय रूपी उद्यान को दग्ध करते हैं, और तीनों संसार को प्रकाश करते हैं, तथा लाखों प्रकार से लक्ष्मी को देते हैं, ऐसे जिनेश्वर देव को नमस्कार करके श्रीमान देवेन्द्र के शिष्य सब शास्त्ररूपी समुद्र में पारंगत श्रीमान् हेमप्रभ सूरि अर्घ काण्ड को स्मरण करते हैं॥१११०-१११३॥

सेतिका तथा पल्लियों की मानसंख्या को सम्प्रति जानकर बहुत अर्घ काण्ड में तथ्य शास्त्र को करते हैं, ॥ १११४ ॥

एक दिनार्ध के मध्य में होने पर भी घटिकार्घ का कारण होता है, तीन सौ साठ खरीदने योग्य वस्तु को मूल्य निश्चय करने के लिये चैत्र में जो प्रधान अर्घ होता है, उस प्रतिपण्यार्घ को प्रतिदिन हठात् ग्रहण करते हैं ॥ १११५-१११६ ॥

---

1. दूरेणैव for द्वारेणैव A. 2. भयो० for भयो० A. A[1]. 3. सति० for सेति० Bh. 4. नव्यं for तथ्य A. 5. प्राप्तभं चापि for प्रसभं वापि A.

त्रिशतषष्टिपण्यानां चतुर्भेदवतामपि ।
प्रत्येकं गणितादीनां चैत्रार्घेणैव निश्चयः ॥ १११७ ॥
वाणीदेवीप्रसादाच्च गुरोः शुद्धोपदेशतः ।
सत्यो भवति शास्त्रार्थो नु भवन्नेव निश्चयः ॥ १११८ ॥
वक्रं याति ग्रहः कश्चिदश्विनाषाढयोर्यदि ।
कर्कतोऽलिनि संक्रान्तौ कर्कतुलार्घसंभवः ।, १११९ ॥
मृगश्चित्रा धनिष्ठा च पुनर्वसू च वासवम् ।
शताख्यं चाग्निदेवं च पञ्चत्रिंशच्छतं भवेत् ॥ ११२० ॥
अश्विनी भरणी कर्णा स्वातिश्च नवतिः पुनः ।
विशाखा रोहिण पौष्णं शतं सार्द्धं बुधैः स्मृतम् ॥११२१॥
आर्द्रानुराधिकाधिष्ण्यशतं[1] विंशतिमिश्रितम् ।
अधिकं पञ्चसप्तत्या पुष्यं हस्तं शतं स्मृतम् ॥ ११२२ ॥

तीन सौ साठ पण्यों का तथा उस के चारों भेदों का प्रत्येक के गणितादि का विचार चैत्रार्घ से ही निश्चित होता है ॥ १११७ ॥

सरस्वती देवी की प्रसन्नता से तथा गुरु के शुद्धोपदेश से अर्थ शास्त्र निश्चय सत्य होता है ॥ १११८ ॥

आश्विन, आषाढ़, में तुल, कर्क के संक्रान्ति में कोई ग्रह वक्री हो तो कर्क तुला का अर्घ सम्भव होता है ॥ १११६ ॥

मृगशिरा, चित्रा, धनिष्ठा, पुनर्वसु, धनिष्ठा, शतभिषा, कृत्तिका इन नक्षत्रों की एक सौ पैंतीस संख्या होती है ॥ ११२० ॥

अश्विनी, भरणी, श्रवण, स्वाति, इन नक्षत्रों की ६० संख्या होती है, विशाखा, रोहिणी, रेवती, इन नक्षत्रों की १५० संख्या होती है ॥ ११२१ ॥

अनुराधा, आर्द्रा, में १२० संख्या, और तथा हस्त, नक्षत्र में १७५ संख्या होती है, ॥ ११२२ ॥

1· आर्द्रानुराधाधिष्ण्यं च for आर्द्रानुराधिकाधिष्ण्य A. A[1].

शतं च भवत्यश्लेषा पञ्चनवतिपूरितम् ।
एकादशाधिकान्यत्र मघानवशतानि च ॥ ११२३ ॥
सप्तदशाधिकं चात्र शतद्वयं च फाल्गुनी ।
द्वे तु भद्रपदे चैवमेतदृक्षचतुष्टयम् ॥११२४॥
पूर्वाषाढाशते द्वे च पञ्चाशदधिके मते ।
द्वे शते ऽप्युत्तराषाढा पञ्चपञ्चाशदुत्तरे ॥ ११२५ ॥

मूले षष्टिर्भवेदेवं धिष्ण्यसंख्या प्रकीर्तिता[1] ।
षण्णवतिशतान्यष्टौ चतुस्सहस्रपिण्डकः ॥ ११२६ ॥
नक्षत्रसंख्यापिण्डः ४८९६
सिंहधनुर्घटाः सर्वे नवतिसंख्यका मताः ।
शतसंख्यो भवेत्कर्कस्त्वेकविंशतिमिश्रितः ॥ ११२७ ॥
पञ्चोत्तरशतं शेषा मेषादय उदाहृताः ।
द्वादशैव शतान्यत्राप्येकत्रिंशद् युतानि च ॥ ११२८ ॥
१२३१ सर्वराशिसंख्यापिण्डः कथितः ।
प्रत्येकं खलु खेटानां संख्यां ब्रवीमि शाश्वतीम् ।

अश्लेषा नक्षत्र में १९५ संख्या, और मघा में ९११ संख्या होती है ॥ ११२३ ॥

पूर्वफाल्गुनी, उत्तरफाल्गुनी, नक्षत्र में २१७ और पूर्वभाद्र, उत्तर भाद्र नक्षत्र में २ संख्या होती हैं यह नक्षत्रचतुष्टय होता है ॥ ११२४ ॥

पूर्वषाढ़ नक्षत्र में २५० और उत्तराषाढ़ नक्षत्र में २५५ संख्या होती है ॥ ११२५ ॥

मूल नक्षत्र में साठ होता है इस प्रकार नक्षत्रों की संख्या कही, इस प्रकार नक्षत्र संख्या पिण्ड ४८९६ होता है ॥ ११२६ ॥

सिंह, धनुष, कुम्भ में ७० संख्या, कर्क में १२१, संख्या होती है ॥ ११२७ ॥

और शेष मेषादिक राशियों की १०५ संख्या, सब को मिला कर १२३१ संख्या पिण्ड होता है ॥ ११२८ ॥

1· प्रदर्शिता for प्रकीर्तिता A,

चन्द्रे बुधे कुजः षष्टिः पञ्चत्रिंशच्छतं[1] रविः ॥ ११२९ ॥
गुरुश्च पञ्च पञ्चाशत् शुक्रोऽपि पञ्चसप्ततिः ।
पञ्चषष्टिः शनिर्वाच्यो राहुर्नवतिसंख्यकः ॥ ११३० ॥
ष शतान्यत्र जायन्ते ग्रहाः सर्वेऽपि पिण्डिताः ।
ग्रहनक्षत्रराशीनां संख्यां संकल्य[2] चैकतः ॥११३१ ॥
गुणितं ग्रहसंख्येन स्थाप्यं राशिद्वयं पृथक् ।
अधोराशेस्ततो भागं गृह्णीयाच्चैत्रजार्घतः ॥ ११३२ ॥
यत्तत्र जायते लब्धं भसंख्यां तत्र निक्षिपेत् ।
मेलयित्वा[3] च तां संख्यां भागं गृह्णीत तत्क्षणात् ॥ ११३३ ॥
उपरिभे[4] धृते राशौ सम्यगङ्कप्रवर्तनैः[5] ।
यत्तत्र च भवेल्लब्धं संस्थाप्यं तदुपर्यधः ॥११३४॥
ग्रहाङ्कै र्भाजितैर्लब्धमुपरि पूर्ववत् क्षिपेत् ।
न्यस्ते च जायते योङ्कस्तावत्यः सेतिका मिताः ॥११३५ ॥

प्रत्येक ग्रहों की संख्या को मैं कहता हूँ, चन्द्रमा, बुध, मंगल, इन ग्रहों की ६० संख्या, और रवि की १३५. संख्या होती है ॥११२६॥

गुरु की ५५ संख्या, और शुक्र की ७५, शनि की ६५, तथा राहु को ६० संख्या होती है ॥ ११३० ॥

इन ग्रहों की संख्या को एकत्र कर ६०० पिण्ड होता है, ग्रह, नक्षत्र, राशि, इन को संख्या को एक जगह इकठ्ठा करके ॥ ११३१ ॥

उसको ग्रह की संख्या से गुणन कर पृथक २ दो जगह स्थापित करें, उस में से आधी राशि को चैत्रजार्घ से भाग देवें ॥ ११३२ ॥

जो लब्धि हो उस में नक्षत्र की संख्या को जोर देवें। उस भाग को लेकर ऊपर स्थापित अङ्क में मिला कर जो हो उसको ऊपर में उस से नीचे स्थापित करें ॥ ११३३–११३४ ॥

उस को ग्रह की संख्या से भाग देवें लब्धि जो हो उस को पूर्ववत् भ संख्या में क्षेप करके न्यास करने पर जो अंक आवे उतने ही सेतिका का प्रमाण होता है ॥ ११३५ ॥

1. पञ्चत्रिंशत्तमा Bh. 2. संमील्य for संकल्य A. 3 मीलयित्वा for मेलयित्वा A. 4. उपरि मिते for उपरिभे Bh. 5. सम्यगेक प्रवर्तनैः A.

चतुर्भक्के ततो जाताः माणकाः कणसंग्रहे[1] ।
घृते धान्ये तिले तैले[2] दृष्टिभाण्डे[3] सुगन्धिकम् ॥ ११३६ ॥
अनेनैव क्रमेणात्र सर्वेषामर्घनिश्चयः ।
त्रिगुणश्च भवेदर्घोऽप्युच्चैर्वक्रे च खेचरे ॥ ११३७ ॥
गेहे मित्रे स्वके चांशे द्विगुणोऽर्घो[4] ध्रुवं मतः ।
शनौ नीचे तथा पापे तदंशेऽपि ग्रहे सति ॥ ११३८ ।
लब्धार्घस्य बुधैर्हेयं चार्द्धमर्घ[5]परीक्षणे ।
शेषेषु च यथासंख्यं तथैवार्घं[6] विनिर्दिशेत् ॥ ११३९ ॥
क्षयवृद्धिद्वयं कृत्वा ऽर्घं न्यस्य स्थानयोर्द्वयोः ।
चतुर्युग्मे चतुर्भागं लब्धं क्षिपेत्तथोपरि ॥ ११४० ॥

उस को चार से भाग देवें तो कण संग्रह में, घृत, धान्य, तिल, तैल, भाण्ड, सुगन्धित द्रव्य, इत्यादि का परिमाण हो जायगा ॥११३६॥

इस क्रम से सब का अर्घ निश्चय होता है, यदि ग्रह उच्च का हो वक्री हो तो अर्घ त्रिगुणा होता है ॥ ११३७ ॥

यदि मित्र के घर में या अपने घर में वा मित्र तथा अपनी नवमांश ग्रह हो तो द्विगुणा अर्घ होता है।

यदि शनि तथा अन्य पापग्रह नीच में हो या उसके अंश में हो या शत्रु आदि के घर में हो तो पंडित लोग लब्धार्घ में आधा घटा देवें। इस प्रकार शेष का भी यथा संख्या पर से अर्घ का निश्चय करें ॥११३८-११३६॥

इस प्रकार क्षय वृद्धि करके दो स्थानों में अर्घ को स्थापित करें और उसको चार से भाग देकर लब्धि को ऊपर में फिर क्षेप करें ॥११४०॥

1. गण्य for कण्य Bh. 2. चैव for तैले Bh. 3. दृष्टे for दृष्टि Bh. 4. ०र्घो for ०र्घो Bh. 5. मय० for ०मर्घ Bh. 6. ०बार्घं for ०वार्घं Bh.

मरण्यादिचतुष्कं च आर्द्रादिषु चतुष्टयम् ।
मेघाद्याः पञ्चधिष्ण्यास्तु स्वातित्रिकेन्द्रपञ्चकम् ॥११४१ ॥

धनिष्ठाद्यं ततः षट्कं चैवं भसप्तविंशतिः ।
पञ्चवेदेन भागोऽपि गृह्यतेऽधमराशितः ॥ ११४२ ॥

यत्तत्रापि पुनर्लब्धं राशिस्तु शोध्यते ततः ।
त्रिषट्केन च गृह्णीत तिस्रः संख्यास्त्वधाधमे ॥ ११४३ ॥

गृहीत्वा तु पुनर्लब्धं राशावुपरि भे न्यसेत् ।
उदयास्तमने वक्रे ग्रहणे चन्द्रसूर्ययोः ॥ ११४४ ॥

ग्रहयुद्धे राशिसंक्रान्तौ कणार्घस्त्वेष[1][2] जायते ।
आदित्येनात्र पूर्णार्घः स्वदेशे चैव लभ्यते ॥ ११४५ ॥

चन्द्रेण तु परे देशे शुक्रणापि स्वमण्डले ।
पूर्वेणास्तमितः शुक्रः पश्चिमस्यामुदेति चेत् ॥ ११४६ ॥

भरणी आदि के चार नक्षत्र, तथा आर्द्रा आदि के चार, मघा आदि के पांच नक्षत्र, स्वाती आदि के तीन, ज्येष्ठा आदि के पांच नक्षत्र ॥११४१॥

धनिष्ठा आदि के छः नक्षत्र इस प्रकार सत्ताईस नक्षत्र हुए, पांच चार का अधम राशि से भाग लेने पर जो वहां लब्ध हो उस राशि को घटा देते हैं, फिर तीन छः से भाग लेने पर तीन संख्या अधमाधम राशि में ग्रहण करते हैं ॥११४२-११४३॥

उस लब्ध राशि को उपर के नक्षत्र में न्यास करें, ग्रहों के उदय अस्त, तथा वक्र में और चन्द्र सूर्य का ग्रहण में ॥११४४॥

ग्रह युद्ध से राशि संक्रान्ति में यह कणार्घ होता है, सूर्य से स्वदेश में ही पूर्णार्घ लाभ होता है ॥१०४५॥

चन्द्रमा से अन्य देश में और शुक्र से भी अपने देश में, यदि पूर्व में अस्त होकर पश्चिम में उदित हो तो ॥११४६॥

1. कर्णार्घ० for कणार्घ Bh. 2. ०षु for ०ष Bh.

स्वातित्रिके निजं भागं शोधयत्यर्घपद्धतौ ।
अस्तमितः प्रतीच्यां चेदुदेति पूर्वतः पुनः ११४७ ॥
तदा पञ्चसु ज्येष्ठादौ पञ्चमं भागकं क्षिपेत् ।
यावन्तो ग्रहयोगास्ते तावत्संख्याः पृथक् पृथक् ।
गुणाकारो भवेत्तावान् भागाहारोऽपि तादृशः ॥ ११४८ ॥

इत्यर्घकाण्डम्

उदिताद्या ग्रहा यत्र धिष्ण्ये तिष्ठन्ति संस्थिताः ।
तन्नक्षत्रतद्राशेश्च संख्यां संमील्य तावतीम् ॥ ११४९ ॥
हन्तव्या तद्ग्रहेणैव द्विस्थं राशिं ततः कुरु ।
द्विस्थस्याधः स्थितं राशिं चैत्रार्घेण[1] तु तं[2] भजेत् ॥ ११५० ॥
यल्लब्धं तेन खेटेन त्वेकीकृत्यापि मूलके ।
पिण्डे भागस्तु हर्तव्यो लब्धमर्घस्ततो भवेत् ॥ ११५१ ॥

स्वाती त्रिक नक्षत्र में अपने भाग को घटायें, यदि पश्चिम में अस्त होकर पूर्व में उदित हो तो ज्येष्ठा आदि के पांच नक्षत्र में पञ्चम भाग को क्षेप करें ।

जितने संख्यक ग्रह योग हों उतने संख्यक पृथक् पृथक् गुणाक या भागहार भी होते हैं ॥११४७-११४८ ॥

इत्यर्घकाण्डम्

उदितादि ग्रह जिस राशि और नक्षत्र में हों उस राशि नक्षत्र की संख्या को एकत्र करें ॥११४९॥

उसको उस ग्रह की संख्या से गुणा कर दो जगह स्थापित करें उसमें अधःस्थित राशि को चैत्रार्घ से भाग देवें ॥११५०॥

जो लब्ध हो उसमें ग्रह को मिलाकर फिर पिण्ड में भाग दें तो लब्ध अर्घ होगा ॥११५१॥

1. चैत्रार्घेण for चैत्रार्घेण Bh. 2. वां for तं Bh.

ये लब्धा सितिकाः[1] शेषं चतुर्गुण्यं हृतं ततः ।
तेनैव पूर्वभागेन भक्तेन माणकाः[2] पुनः ॥ ११५२ ॥
यच्छेषं तच्चतुर्गुण्यं तेन भागेन पल्लिका ।
ततोऽपि मूललब्धार्घं द्विधा कृत्वा पुनर्भजेत् ॥ ११५३ ॥
त्रिकवेदशराश्चैव लब्धमुपरि भे[3] क्षिपेत् ।
तल्लब्धं सेतिकामध्ये वक्रश्चेत् त्रिगुणं क्षिपेत् ॥ ११५४ ॥
स्वगेहे मित्र[4]गेहे च द्विगुणमेव[5] विन्यसेत् ।
शत्रौ पापे च नीचे च लब्धार्घं तत्र पातयेत् ॥ ११५५ ॥
संगुण्यभागकैः शेषं लब्धं च माणकास्ततः ।
श्रीमद्धेमप्रभेणैवं वर्तिनी दर्शिता स्वयम् ॥ ११५६ ॥
श्रीमद्देवेन्द्रशिष्यश्रीहेमप्रभसूरिविरचितमर्घकाण्डम् ।

लब्ध सेतिका हुआ शेष को चार से गुणा कर उसी पूर्व के भाजक से भाग दे तो माणक हो जायगा ॥११५२॥

तब जो शेष बचे उसको चार से गुणा कर उसी से फिर भाग दे तो पल्लिका होगी, तो भी मूल लब्धार्घ को दो जगह स्थापित करके फिर उस भाजक से भाग दें तीन, चार, पांच लब्ध के उपर के नक्षत्रों जोड़ दें, तब जो लब्ध हो वह सेतिका में यदि वक्र हो तो त्रिगुणित क्षेप करें ॥११५३-११५४॥

यदि अपने घर में या मित्र के घर में हो तो द्विगुणा न्यास करें और शत्रु या पाप के घर में या नीच में हो तो लब्धार्घ में आधा घटा देवें ॥११५५॥

उसको चार से गुणा कर भाजक से भाग देवें तो माणक होता है यह प्रकार श्रीमान् हेमप्रभसूरि ने स्वयं दिखलाया है ॥११५६॥

इति श्री महेन्द्र शिष्य श्रीहेमप्रभसूरिविरचितमर्घकाण्डम् ।

1. सेतिकाः for सितिकाः Bh. 2. भक्तेन बनकाः for भक्तेन माणकाः Bh. 3. लब्धस्वपरिनि for लब्धमुपरि भे Bh. 4. पर for मित्र Bh. 5. द्विगुणेनैव for द्विगुणमेव A.

घने चक्रं यदा खेटाः कुर्वन्ति मिलिता घनाः ।
तदा धान्यमहर्घं स्यात्सर्वं पण्यौघमध्यतः ॥११५७॥
रणे वक्रं यदा यान्ति सर्वेऽपि मिलिता ग्रहाः ।
तदा धान्यं समर्घं स्यात् जायते भुवि वै मतम् ॥११५८॥
अपात्रदानतोऽपुण्यं पुण्यं सत्पात्रदानतः ।
इत्यपात्रे न दातव्यमर्घकाण्डमहोदयम् ॥११५९॥
प्रतिमास्वल्पदेवानां यावन्तः परिमाणवः ॥
तावद्युगसहस्राणि कर्तुर्भोगभुजः फलम् ॥११६०॥

इति त्रैलोक्यप्रकाशो ग्रन्थः समाप्तः ॥

यदि घन में सब ग्रह मिलकर एकत्रित हो जाय तो सब धान्य महर्घ होता है ॥११५७॥

यदि रण में सब ग्रह मिलकर वक्री हो जाय तो पृथ्वी पर सब धान्य महर्घ होता है ॥११५८॥

अपात्र को दान देने से पाप होता है और सत्पात्र को दान देने से पुण्य होता है, इसलिये अपात्र को महान उदयवाला अर्घ काण्ड नहीं देना चाहिये ॥११५९॥

सब देवताओं की जितनी मूर्तियां है उतने सहस्र महायुग पर्यन्त महान् सुख को भोग करने के लिये पात्र को यह देना चाहिये ॥११६०॥

इति त्रैलोक्यप्रकाशो ग्रन्थः समाप्तः ।

